## दीपप्रज्वालन

ॐ स्थिरोभवविड्वङ्गऽआशुर्भवबाज्यर्वन् । पृथुर्भवसुखदस्त्वमग्नेःपुरीषवाहणः । यो मन्त्र पढी दीपप्रज्वालन गर्नुपर्दछ र चन्दन अक्षता चढाई तलको मन्त्रले बत्तीलाई नमस्कार गर्नुपर्दछ ।

ॐ पृष्टोदिविपृष्टोऽअग्निःपृथिव्याम्पृष्टोविश्वाऽओषधीराविवेश ।
वैश्वानरःसहसापृष्टोऽअग्निःसनोदिवासरिषस्पातुनक्तम् ।।

## आसनाभिमन्त्रण

बत्ती बालेपछि ॐ ह्रीं आधारशक्तिकमलासनाय नमः भनी आसनमुनि फूल-अक्षता आदि चढाई आफू बसेको आसनलाई हातले छोएर तलको मन्त्रले अभिमन्त्रण गर्नुपर्दछ ।

**ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।**

## भूतोत्सारण

अभिमन्त्रणपछि कमेरो, सर्स्यूँ, दही, रातो अक्षता, तिलहरू लिएर तलका मन्त्रले सबैतिर छर्दै भूतोत्सारण गर्नुपर्दछ ।

**ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।**
**ॐ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्। सर्वेषामविरोधेन पूजाकर्म समारभे।।**

यसपछि शिखा बाँधीकन तीन पटक आचमन गरी तीन पल्ट प्राणायाम गर्नुपर्दछ । त्यसपछि तीन टुक्रा कुश र दूबोले तलको मन्त्रद्वारा पञ्चगव्य चारैतिर छर्कनुपर्दछ ।

**ॐ रक्षोहणो वो बलगहनः प्रोक्षामि वैष्णवान् रक्षोहणोवो बलगहनोवनयामि वैष्णवान्रक्षोहणो वो बलगहनो-वस्तृणामि वैष्णवान् रक्षोहणौ वां बलगहनौ पर्य्यू हामि वैष्णवी वैष्णवमसि वैष्णवाः स्थ ।।**

## मङ्गलपाठ एवं शान्तिपाठ

### मङ्गलपाठ

**सुशान्तिर्भवतु । श्रीमन्महागणाधिपतये नमः । लक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातापितृभ्यां नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः ।**

**विश्वेशं माधवं दुण्ढिं दण्डपाणिं च भैरवम्। वन्दे काशीगुहां गङ्गां भवानीं मणिकर्णिकाम् ।।१।।**
**वक्रतुण्ड महाकाव्य कोटिसूर्यसमप्रभ । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।।२।।**
**सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ।।३।।**

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।।४।।
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ।।५।।
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।।६।।
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ।।७।।
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।।८।।
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ।।९।।

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ।।१०।।

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ।।११।।
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ।।१२।।
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।१३।।
स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ।।१४।।
सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ।।१५।।

## शान्तिपाठ

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो ऽअपरीतास ऽउद्भिदः । देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ।। देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम् । देवानां सख्यमुपसेदिमा वयं देवा न ऽआयुः प्रतिरन्तु जीवसे ।। तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्त्रिधम्। अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ।। तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः । तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ।। तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये।। स्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।। पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा ऽअवसागमन्निह ।। भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ।। शतमिन्नु शरदो ऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ।। अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा ऽअदितिः पञ्चजना ऽअदितिर्जातमदितिर्जनित्वम् ।। ( यजु. २५/१४-२३ ) द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।। यतो यतः समीहसे ततो नो ऽअभयं कुरु। शं नः कुरु प्रजाभ्यो ऽअभयं नः पशुभ्यः ।। ( यजु. ३६/१७, २२ )

## गोदान

मङ्गलपाठ एवं शान्तिपाठपछि निम्न विधिअनुसार प्रायश्चित्त गोदान गर्नुपर्दछ ।

गोपूजन - ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।। ॐ गवे नमः । ॐ गोप्रत्याम्नायीभूतद्रव्याय नमः । यो मन्त्रले गोदानका निमित्त छुट्याइएको रूपैयाँ पैसा अथवा गाईलाई अघिल्तिर राखेर पूजा गर्नुपर्दछ ।

ब्राह्मणपूजन - ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः।। ॐ ब्राह्मणाय नमः ।। यो मन्त्रले ब्राह्मणलाई टीका लगाई पूजा गर्नुपर्दछ ।

सङ्कल्प - हरिः ॐ तत्सत् तत्सत् तत्सत् ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो पुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतैकदेशे अमुकनगरे अमुकग्रामे अमुकस्थाने वा बौद्धावतारे अमुकनामसंवत्सरे श्रीसूर्ये अमुकायने अमुकर्तौ महामाङ्गल्यप्रदमासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु च यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा ( अमुकवर्मा अमुकगुप्त ) अहं श्रीगणेशपुराणयज्ञस्य पूर्वाङ्गत्वेन विधीयमाने दीपकलशगणेशादिपूजनकर्मणि कायिकवाचिकमानसिकसकलप्रायश्चित्तार्थं तथा च सद्योदेहविशुद्ध्यर्थं इमां गां रुद्रदैवत्यां तत्प्रत्याम्नायीभूतं द्रव्यं रजतखण्डं चन्द्रदैवताकं ताम्रखण्डं सूर्यदैवताकं द्रव्यान्तरं वा यथानामदैवताकममुकगोत्राय अमुकशर्मणे ब्राह्मणाय सुपूजिताय प्रायश्चित्तगोदानत्वेन तुभ्यं सम्प्रददे तत्सन्न मम । सङ्कल्प सकिएपछि ब्राह्मणका हातमा कुशपानी राखी गोप्रार्थना गर्नुपर्दछ ।

गोप्रार्थना - ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी। तीर्थदेवमयी यस्मात् तस्मात् शान्तिं प्रयच्छ मे ।। ॐ गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।। यो मन्त्र पढ्दै गाई अथवा रूपैयाँ-पैसाको प्रार्थना गर्नुपर्दछ ।

दानप्रतिष्ठासङ्कल्प - ॐ अद्येह कृतैतत्प्रायश्चित्तार्थगो ( प्रत्याम्नायीभूतरजतद्रव्य )दानकर्मणः प्रतिष्ठार्थं तत्साङ्गतासिद्ध्यर्थं इमां दक्षिणां - रजतद्रव्यं चन्द्रदैवताकं ( ताम्रखण्डं वा सूर्यदैवताकं ) .................... गोत्राय .................. शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । तत्सन्न मम ।। यो पढी ब्राह्मणका हातमा कुश-जलसहित दक्षिणा राखिदिनुपर्दछ । ब्राह्मणले पनि ॐ स्वस्तिः भन्दै दक्षिणा ग्रहण गर्नुपर्दछ ।

अभिषेक - द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ यस मन्त्रले यजमानलाई अभिषेक गरिदिनुपर्दछ । यसपछि विधिपूर्वक अर्घ्यपात्र आदि बनाई पूजन गर्नुपर्दछ।

## अर्घ्यनिर्माणविधि

**अर्घ्यसामग्रीपरिचय**

जल, दूध, कुश, दही, दुबो, अक्षता, तिल, जौ र सर्स्यूँ यी आठ पदार्थद्वारा अर्घ्य तयार गरिन्छ । अर्घ्यका आठ पदार्थहरूको सम्बन्धमा विभिन्न मतहरू रहेका छन् । कसैले जल, दूध, कुश, दही, दुबो, अक्षता, तिल र सुपारी गरी यी आठ पदार्थद्वारा अर्घ्य निर्माण गर्नुपर्ने कुरा बताएका छन् । कसैले जल, दूध, कुश, दही, अक्षता, तिल, जौ र सर्स्यूँ यी आठ पदार्थलाई अर्घ्यका अङ्ग मानेका छन् । कसैले पुष्प, अक्षता, जौ, कुश, तिल, सर्स्यूँ र दुबोलाई अर्घ्यका आठ अङ्ग मानेका छन् । उक्त चार मतमा उल्लिखित सामग्रीहरूमध्ये आफ्नो परम्पराअनुसार जुन मतका सामग्रीहरूको प्रयोग गरे पनि हुन्छ ।

**प्रयोग**

कर्ताले अथवा ब्राह्मणले आसनमा बसेर आचमन गरेपछि यथाशक्ति प्राणायाम गरी आफ्नो अघिल्तिर दाहिनेपट्टि एउटा चोखो ठाउँमा कर्मपात्रको जल छर्केर चन्दनद्वारा बिन्दुसहितको त्रिकोण लेख्नुपर्दछ ।

**वह्निमण्डलपूजन र अर्घ्यपात्र स्थापना**

माथि बताइएअनुसार बनाइएको त्रिकोणमा धूम्रार्चि, ऊष्मा, ज्वलिनी, ज्वालिनी, विस्फुलिङ्गिनी, सुश्री, सुरूपा, कपिला, स्वधा, स्वाहा यी दश कलाका स्वामी अग्निमण्डलको चन्दन, अक्षता आदिद्वारा **ॐ दशकलात्मने वह्निमण्डलाय पात्राधाराय नमः** यस मन्त्रद्वारा पूजा गरी शङ्खमुद्रा देखाएपछि उक्त त्रिकोणमाथि अर्घ्यपात्रको स्थापना गर्नुपर्दछ ।

**सूर्यमण्डलपूजन**

अर्घ्यपात्रमा तपिनी, तापिनी, धूम्रा, मरीचि, ज्वालिनी, रुचि, सुषुम्णा, भोगदा, विश्वास, बोधिनी, धारिणी र क्षमा यी बाह्र कलाका स्वामी सूर्यमण्डलको **ॐ सूर्यमण्डलाय द्वादशकलात्मने नमः, अमुकदेवार्घ्यपात्राय नमः** यी मन्त्रद्वारा अर्घ्यपात्र र सूर्यमण्डलको फूल, चन्दन, अक्षताले पूजा गर्नुपर्दछ । पूजा गरेपछि अर्घ्यपात्रमा तलको मन्त्र पढी जल राख्नुपर्दछ ।

जल प्रक्षेपण - **आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि।**

**जलमा चन्द्रमण्डलपूजन**

अर्घ्यपात्रमा राखिएको जलमा अमृता, मानदा, पूषा, पुष्टि, तुष्टि, रति, धृति, शशिनी, चन्द्रिका, कान्ति, ज्योत्स्ना, श्रीः, प्रीति, अङ्गना, पूर्णा र पूर्णामृता यी १६ कलाले सम्पन्न चन्द्रमण्डलको **ॐ षोडशकलात्मने चन्द्रमण्डलाय नमः** यस मन्त्रबाट गन्ध, पुष्प, अक्षताले पूजन गर्नुपर्दछ ।

**अर्घ्यपात्रमा विभिन्न पवित्र वस्तुहरूको प्रक्षेपण**

**दुग्धप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा दूध राख्नुपर्दछ -

पयः **पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ।।**

**पवित्रप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा पवित्र अर्थात् कुश राख्नुपर्दछ -

ॐ **पवित्रेस्थोवैष्णव्योसवितुर्वःप्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ।।**

**दधिप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा दही राख्नुपर्दछ -

**ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः । सुरभिनोमुखाकरत्प्रणऽआयूं षितारिषत् ।।**

**दूर्वाप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा दुबो राख्नुपर्दछ -

**ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि । एवानोदूर्वेप्रतनुसहस्त्रेणशतेनच ।।**

**अक्षताप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा अक्षता राख्नुपर्दछ -

**ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत । अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी।।**

**तिलप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा तिल राख्नुपर्दछ -

**ॐ तिलोसिसोमदैवत्योगोसवोदेवनिर्मितः । प्रत्नमद्भिःपृक्तःस्वधयापितॄँल्लोकान्प्रणाहि नःस्वाहा।।**

**यवप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा जौ राख्नुपर्दछ -

**ॐ यवोसियवयास्मद्द्वेषोयवयारातीः।।**

**सर्षपप्रक्षेपण** - तलको मन्त्र पढी अर्घ्यपात्रमा सस्यूँ राख्नुपर्दछ -

**ॐ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा । मनैनुबभ्रूणामहद्दशतन्धामानिसप्तच।**

**तीर्थजलप्रक्षेपण** - अर्घ्यपात्रमा उक्त वस्तुहरूको प्रक्षेपणपछि गङ्गा आदि तीर्थको जल निम्नमन्त्र पढी राख्नुपर्दछ -

**ॐ गङ्गे च यमुने चैव गोदावरी सरस्वती । नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।।**

**अर्घ्यपात्रमा तीर्थहरूको आवाहन** - अर्घ्यपात्रमा तीर्थजल राखेपछि तलका मन्त्रहरू पढी अङ्कुश मुद्रा देखाएर सूर्यमण्डलबाट तीर्थहरूको आवाहन गरी पूजा गर्नुपर्दछ ।

**ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ।।**

त्यसपछि मत्स्यमुद्राले अर्घ्यपात्र ढाकेर धेनुमुद्रा देखाई अमृतीकरण गर्नुपर्दछ ।

## सूर्यार्घ्य

अर्घ्यपात्र पूजनपछि तलका मन्त्रले सूर्यलाई अर्घ्य दिनुपर्दछ ।

**ॐ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ।**
**केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ।।**
**ॐ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।**
**त्रयीमयाय त्रिगुणात्ममूर्तये विरञ्चिनारायणशङ्करात्मने ।।**
**ॐ एहि सूर्य सहस्त्रांशो तेजोराशे जगत्पते । अनुकम्पय मां देव गृहाणार्घ्यं दिवाकर ।।**

## प्रतिज्ञासङ्कल्प

हरिः ॐ तत्सत् तत्सत् तत्सत् ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो पुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतैकदेशे अमुकनगरे अमुकग्रामे अमुकस्थाने वा बौद्धावतारे

**अमुकनामसंवत्सरे श्रीसूर्ये अमुकायने अमुकर्तौ महामाङ्गल्यप्रदमासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु च यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा ( अमुकवर्मा अमुकगुप्तः ) अहं ममाभिलषितसिद्ध्यर्थं श्रीमद्गणेशप्रीत्यर्थमिहलोके सुखं भुक्त्वा परत्र स्वानन्दभुवनप्राप्त्यर्थञ्च पञ्चाहेन अथवा नवाहेन अथवा एकदशाहेन अथवा एकविंशत्यहेन यथामिलितोपचारैः श्रीगणेशपुराणयज्ञं तत्पूर्वाङ्गत्वेन दीपकलशगणेशादिदेवतापूजनञ्चाहं करिष्ये ।** यसरी प्रतिज्ञासङ्कल्प गर्नुपर्दछ । यसपछि श्रीगणेशको आवाहन गर्नुपर्दछ ।

## गणेशको आवाहन

क ) **हे हेरम्ब त्वमेह्येहि ह्यम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभयुतः पितः ।।**
**नागास्यं नागहारं त्वां गणराजं चतुर्भुजम् । भूषितं स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ।।**
**आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां यागं च रक्ष मे ।।**

ख ) **ॐ गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम् ।। ( यजु. २३/१९ ) । ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय गणपतये नमः, गणपतिमावाहयामि स्थापयामि ।** यी मन्त्रहरूबाट श्रीगणेशको आवाहन गरेपछि ब्राह्मणवरण गर्नुपर्दछ ।

## ब्राह्मणवरण

एकपल्ट फेरि आचमन गरी ब्राह्मणवरण र पुण्याहवाचनलाई चाहिने चन्दन, अक्षता, फूल, माला, दूबो, पान-सुपारी, वस्त्र, आसन, पञ्चपात्र, औंठी, भेटीहरू सबै अघिल्तिर राखेर **ॐ वरणद्रव्येभ्यो नमः** भनी पूजा गर्नुपर्दछ । त्यसपछि हातमा कर्मपात्रको कुशसहित जल लिएर सङ्कल्प गर्नुपर्दछ ।

सङ्कल्प - ॐ अद्येह .........गोत्र...........प्रवर........( माध्यन्दिनीयशाखान्तर्गतशुक्लयजुर्वेदाध्यायी ) .......... **शर्मा ( वर्मा वा ) अहं मम करिष्यमाण गणेशपुराणयज्ञकर्मणि दीपकलशगणेशपूजनपूर्वकं यथाविहित आचार्यादिकर्म कर्तुं पुण्याहवाचनार्थञ्च यथानामगोत्रान् यथानामशर्मणो ब्राह्मणानेभिश्चन्दनपुष्पाक्षतताम्बूलपूगीफलवासोद्रव्याभरणादिभिर्युष्मान् अहं वृणे ।** यो सङ्कल्प पढेर ब्राह्मणहरूलाई टीका लगाई वस्त्र, द्रव्य, फलहरू हातमा राखिदिनुपर्दछ । ब्राह्मणहरूले पनि **ॐ वृताः स्मः** भन्नु पर्दछ । अनि यजमानले **ॐ यथाविहितं कर्म कुरुत** भनेपछि ब्राह्मणहरूले **ॐ करवाम** भनी पुण्याहवाचन गर्नुअघि यजमानले ब्राह्मणको प्रार्थना गर्नुपर्दछ ।

ब्राह्मणप्रार्थना- **ॐ ब्राह्मणाः सन्तु मे शस्ताः पापात् पान्तु समाहिताः । वेदानां चैव दातारः पातारः सर्वदेहिनाम् ।।१।।**
**जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः । देवानाञ्च पितृणाञ्च तृप्त्यर्थं पाठकाः कृताः ।।२।।**
**येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् । रक्षन्तु सततं तस्माज्जपयज्ञे व्यवस्थिताः ।।३।।**
**ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् । येषां वाक्यामृतेनैव शुद्ध्यन्ति मलिना जनाः ।।४।।**
**पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः । सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ।।५।।**

श्रोत्रियाः सत्यवाचश्च वेदध्यानरताः सदा । यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ।।६।।
अङ्गीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः । यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ।।७।।
यत्कृपालोकनात् सर्वा ऋद्धयो वृद्धिमाप्नुयुः । मम यज्ञे सदा पूज्याः सन्तु वै नियमान्विताः ।।८।।
अक्रोधनाः शौचपराः सततं ब्रह्मवादिनः । ब्रह्मध्यानरता नित्यं प्रसन्नमनसः सदा ।।९।।
अदुष्टभाषिणः सन्तु मा सन्तु परनिन्दकाः । ममापि नियमा ह्येते भवन्तु भवतामपि ।।१०।।

ब्राह्मणप्रार्थनापछि पुण्याहवाचन गर्नुपर्दछ ।

## पुण्याहवाचन

ब्राह्मणवरणपछि यजमानले हात जोडेर तल दिइएको क्रमले ब्राह्मणहरूसित पुण्याहवाचनका लागि प्रार्थना गर्दै जानुपर्दछ। ब्राह्मणहरूले पनि प्रार्थनाअनुसार क्रमैसित आशीर्वादका मन्त्रहरू पढ्दै जानुपर्दछ । यजमानले हातमा फल आदि लिएर देशकालको उल्लेख गर्दै प्रार्थना वाक्य भन्नुपर्दछ ।

**यजमानको प्रार्थना वाक्य-** ॐ अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणो मम गृहेऽमुककर्मणि **भो ब्राह्मणाः ॐ पुण्याहं भवन्तो ब्रुवन्तु, भो ब्राह्मणाः ॐ पुण्याहं भवन्तो ब्रुवन्तु, भो ब्राह्मणाः ॐ पुण्याहं भवन्तो ब्रुवन्तु ।**

**ब्राह्मणहरूको उत्तर वाक्य-** **ॐ पुण्याहमस्तु, ॐ पुण्याहमस्तु, ॐ पुण्याहमस्तु । ॐ पुनन्तुमादेवजनाःपुनन्तु-मनसाधियः । पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ।।**

**यजमानको प्रार्थना वाक्य-** ॐ अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणो मम गृहेऽमुककर्मणि **भो ब्राह्मणाः ॐ स्वस्ति भवन्तो ब्रुवन्तु, भो ब्राह्मणाः ॐ स्वस्ति भवन्तो ब्रुवन्तु, भो ब्राह्मणाः ॐ स्वस्ति भवन्तो ब्रुवन्तु ।**

**ब्राह्मणहरूको उत्तर वाक्य-** **ॐ स्वस्ति, ॐ स्वस्ति, ॐ स्वस्ति । ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषा-विश्ववेदाः । स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ।।**

**यजमानको प्रार्थना वाक्य-** ॐ अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणो मम गृहेऽमुककर्मणि **भो ब्राह्मणा ॐ समृद्धिं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ समृद्धिं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ समृद्धिं भवन्तो ब्रुवन्तु ।**

**ब्राह्मणहरूको उत्तर वाक्य -** **ॐ समृद्ध्यताम्, ॐ समृद्ध्यताम्, ॐ समृद्ध्यताम् । ॐ सत्रस्यऽऋद्धिरस्य-गन्मज्ज्योतिरमृताऽअभूम । दिवंपृथिव्याऽअद्ध्यारुहामाविदामदेवान्स्वर्ज्ज्योतिः।।**

**यजमानको प्रार्थना वाक्य-** ॐ अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणो मम गृहेऽमुककर्मणि **भो ब्राह्मणा ॐ वृद्धिं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ वृद्धिं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ वृद्धिं भवन्तो ब्रुवन्तु ।**

**ब्राह्मणहरूको उत्तर वाक्य-** **ॐ वृद्ध्यताम्, ॐ वृद्ध्यताम्, ॐ वृद्ध्यताम् । ॐ ज्यैष्ठ्यञ्चमऽआधिपत्त्यञ्चमे-मन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमेमहिमाचमेवरिमाचमेप्रथिमाचमेवर्षिमाच-**

मेद्राघिमाचमेवृद्धञ्चमेवृद्धिश्चमेयज्ञेनकल्पन्ताम् ।।

यजमानको प्रार्थना वाक्य - ॐ अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणो मम गृहेऽमुककर्मणि **भो ब्राह्मणा ॐ कल्याणं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ कल्याणं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ कल्याणं भवन्तो ब्रुवन्तु ।**

ब्राह्मणहरूको उत्तर वाक्य - **ॐ कल्याणम्, ॐ कल्याणम्, ॐ कल्याणम् । ॐ यथेमांवाचङ्कल्याणीमा-वदानिजनेभ्यः। ब्रह्मराजन्याभ्याꣳशूद्रायचार्य्यायचस्वायचारणायच । प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामःसमृद्ध्यतामुपमादोनमतु ।।**

यजमानको प्रार्थना वाक्य - ॐ अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणो मम गृहेऽमुककर्मणि **भो ब्राह्मणा ॐ शान्तिं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ शान्तिं भवन्तो ब्रुवन्तु, भो ब्राह्मणा ॐ शान्तिं भवन्तो ब्रुवन्तु ।**

ब्राह्मणहरूको उत्तर वाक्य - **ॐ शान्तिः, ॐ शान्तिः, ॐ शान्तिः । ॐ द्यौःशान्तिरन्तरिक्षꣳशान्तिःपृथिवीशान्ति-रापःशान्तिःरोषधयःशान्तिः। वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्म-शान्तिःसर्वꣳशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि।।**

यजमानको प्रार्थना वाक्य- ॐ अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणो मम गृहेऽमुककर्मणि **भो ब्राह्मणा श्रियं भवन्तो ब्रुवन्तु, भो ब्राह्मणा श्रियं भवन्तो ब्रुवन्तु, भो ब्राह्मणा श्रियं भवन्तो ब्रुवन्तु ।**

ब्राह्मणहरूको उत्तर वाक्य- **ॐ श्रीः, ॐ श्रीः, ॐ श्रीः । ॐ मनसःकाममाकूतींवाचःसत्यमशीय । पशूनाꣳ-रूपमन्नस्य- रसोयशःश्रीःश्रयताम् ।।**

आशीर्वादप्रदान - **ॐ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ।।
ॐ भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु ।
रक्षन्तु त्वां सदा देवा आशिषः सन्तु सर्वदा ।। पुण्याहवाचनप्रसादोऽस्तु ।** उक्त मन्त्र पढेर ब्राह्मणले यजमानलाई फूल-प्रसाद लगाइदिनु पर्दछ । ब्राह्मणवरण गर्दा ब्राह्मणलाई दिएको फूल-सुपारी, जनै, अक्षता आदि एक वस्त्रको टालामा गाँठो पारी कर्ताको दाहिने पाखुरामा बाँधिदिनुपर्छ । त्यो यज्ञ साङ्गेता गरी फूलपाती सेलाउँदा गङ्गा आदि नदीमा बगाइदिनुपर्छ । यज्ञसमाप्त नहुन्जेल जनैजस्तै बाँधिराख्नुपर्दछ ।

## दीपपूजा

पुण्याहवाचनपछि कर्ताले दीपपूजा गर्नुपर्दछ ।

आवाहन - **ॐ दीपनारायण इह आगच्छ, इह तिष्ठ, मम पूजां गृहाण, यावत् पूजां करोमि तावत् त्वं सुस्थिरो**

भव, सुप्रसन्नो भव, सुवरदो भव । उक्त वाक्यहरूबाट दीपको आवाहन गर्नुपर्दछ ।

नमस्कार - ॐ नमोऽस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ।।
दीपज्योतिः परं ब्रह्म दीपज्योतिर्जनार्दनः । दीपो हरतु मे पापं रक्ष दीप नमोऽस्तु ते ।।
यो मन्त्र पढी दीपलाई नमस्कार गर्नुपर्दछ ।

दीपपूजन - ॐ पृष्टोदिविपृष्टोऽअग्निःपृथिव्याम्पृष्टोविश्वाऽओषधीराविवेश । वैश्वानरःसहसापृष्टोऽअग्निः-सनोदिवासरिषस्पातुनक्तम् ।। ॐ कर्मसाक्षिणे दीपनारायणाय नमः उक्त मन्त्र पढी दक्षिणा-भेटीसमेत चढाउँदै दीपपूजन गर्नुपर्दछ ।

प्रार्थना- ॐ शुभं भवतु कल्याणमारोग्यं सुखसम्पदः । सर्वदुःखविनाशाय दीपज्योतिर्नमोऽस्तु ते ।।

## कलशस्थापना र पूजन

यसपछि निम्न क्रमले कलश स्थापना गरी पूजा गर्नुपर्दछ ।

भूसँस्कार - ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री । पृथिवीयच्छपृथिवीन्दृँ हपृथिवीम्माहिंसीः ।। यो मन्त्रले भूमिको संस्कारका लागि भुइँमा छुनुपर्दछ।

भूमिलेपन - ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः। मानोर्वीरान्रुद्रभामिनो-वधीर्हविष्मन्तःसदमित्वाहवामहे ।। यो मन्त्रले कलश राख्ने भुइँ गोबरले पोत्नुपर्दछ ।

धान्यस्थापना - ॐ धान्यमसिधिनुहिदेवान्प्राणायत्त्वोदानायत्त्वाव्यानायत्त्वा। दीर्घामनुप्रसितिमायुषे-धान्देवोवःसविताहिरण्यपाणिःप्रतिगृभ्णात्त्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि।। यो मन्त्रले पहिल्यै रेखी हालिसकेको ठाउँमा धानको टपरी राख्ने वा पहिले नै राखिसकेको भए छुनुपर्दछ ।

कलशस्थापना - ॐ आजिघ्रकलशम्मह्यात्त्वाविशन्त्विन्दवः । पुनरूर्जानिवर्त्तस्वसानःसहस्रन्धुक्ष्वो-रुधाराःपयस्वतीःपुनर्म्माविशताद्रयिः । यो मन्त्रले धानको टपरीमाथि नकुच्चिएको, प्वाल नपरेको राम्रो कलश राख्नुपर्दछ ।

तीर्थजल निक्षेप - ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्या-ऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ।। यो मन्त्रले कलशमा विभिन्न तीर्थको जल राख्नुपर्दछ ।

सर्वौषधि - ॐ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा । मनैनुबभ्रूणामहं शतन्धामानिसप्तच।। यो मन्त्रले कलशभित्र सर्स्यूं, बेसार आदि सर्वौषधी राख्नुपर्दछ ।

पञ्चरत्न - ॐ हिरण्यगर्ब्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् । सदाधारपृथिवीन्द्यामुते-माङ्कस्मैदेवायहविषाविधेम ।। यो मन्त्रले कलशभित्र पञ्चरत्न वा पैसा राखिदिनुपर्दछ ।

फल - ॐ याःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वं हसः ।। यो मन्त्रले कलशभित्र फल राख्नुपर्दछ ।

जौ - ॐ ओषधयःसमवदन्तसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तं राजन्पारयामसि।। यो मन्त्रले कलशभित्र जौ राखिदिनुपर्दछ ।

चन्दन - ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टांकरीषिणीम् । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ।। यो मन्त्रले कलशभित्र चन्दन राखिदिनुपर्दछ ।

दूबो - ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि । एवानोदूर्वेप्रतनुसहस्रेणशतेनच ।। यो मन्त्रले कलशभित्र दूबो राखिदिनुपर्दछ ।

चोखो माटो- ॐ स्योनापृथिवीनोभवानृक्षरानिवेशनी । यच्छानःशर्म्मसप्रथाः ।। यो मन्त्रले सात ठाउँको चोखो माटो वा तुलसी मठको माटो कलशभित्र राखिदिनुपर्दछ ।

पञ्चपल्लव - ॐ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता । गोभाजऽइत्किलासथयत्सनवथपूरुषम्।। यो मन्त्रले कलशभित्र पञ्चपल्लव राखिदिनुपर्दछ । पञ्चपल्लवको अभावमा निम्न मन्त्रले आम्रपत्र कलशभित्र राखिदिनुपर्दछ - ॐ अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन । ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ।।

वस्त्र - ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु। यदीदयच्छवसऽऋतप्रजात-तदस्मासुद्रविणन्धेहिचित्रम् । उपयामगृहीतोसिबृहस्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा।। यो मन्त्रले कलशमा दुईवटा वस्त्र चढाइदिनुपर्दछ ।

अलङ्करण - ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव। यत्कामास्तेजुहुमस्तन्नोऽअस्तु-वयं स्यामपतयोरयीणाम् ।। यो मन्त्रले कलशलाई दही र राता अक्षताद्वारा सिंगारिदिनुपर्दछ।

वरुणको आवाहन - ॐ तत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः । अहेडमानोवरुणेहबोद्ध्युरुशं समानऽआयुःप्रमोषीः ।। यो मन्त्रले कलशमा वरुणको आवाहन गरी पाद्य, अर्घ्य आदि चढाएर पूजा गर्नुपर्दछ ।

वरुणनमस्कार - ॐ वरुणाय नमस्तेऽस्तु नमः स्फटिकदीप्तये । नमस्ते श्वेतहाराय जलेशाय नमोऽस्तु ते।।

वरुणप्रार्थना- ॐ शङ्खस्फटिकवर्णाभ श्वेतहाराम्बरावृत । पाशहस्त महाबाहो दयां कुरु कृपानिधे ।।

गङ्गा आदिको आवाहन- ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः।।

कलश अभिमन्त्रण- ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणः स्मृतः।। कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः।। अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः । उक्त मन्त्रहरू पढी कलशको स्पर्श गर्दै अभिमन्त्रण गर्नुपर्दछ ।

कलशप्रार्थना- ॐ देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ।।
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ।।
शिवःस्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपितृकाः ।।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।।
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ।

## गणेशपूजा

सङ्कल्प - ॐ अद्येहेत्यादि देशकालौ संकीर्त्य अमुककर्मनिर्विघ्नपरिसमाप्त्यर्थममुककर्माङ्गत्वेन यथालब्धोपचारैर्गणेशपूजनमहं करिष्ये ।

आवाहन - ॐ गणानान्त्वागणपतिं हवामहेप्रियाणान्त्वाप्रियपतिं हवामहेनिधीनान्त्वानिधिपतिं हवामहेव-सोमम ।। आहमजानिगर्भधमात्वमजासिगर्भधम् ।।

ॐ हे हेरम्ब त्वमेह्येहि अम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभयुतः पितः ।।
नागास्य नागहार त्वं गणराज चतुर्भुज । भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ।।
आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष मे ।।

गणेश पूजा - ॐ भूर्भुवः स्वः गणपतये सिद्धिबुद्धिसहिताय सायुधाय सवाहनाय सपरिवाराय इदमासनं समर्पयामि। यो मन्त्र पढेर **सहस्रशीर्षा०** इत्यादि मन्त्रहरूद्वारा क्रमशः आसन, पाद्य, अर्घ्य, आचमनीय, स्नानीय, यज्ञोपवीत, वस्त्र, गन्ध, अक्षता, पुष्प, दूबो, धूप, दीप, नैवेद्य, आचमनीय, पान, अलङ्कार, दक्षिणा द्रव्य एवं वन्दना समर्पण गरी षोडशोपचारले गणेशको पूजा गर्नुपर्दछ । यसपछि फल हातमा लिएर निम्न मन्त्रले गणेशको प्रार्थना गरी लड्डू चढाउनुपर्दछ ।

फल समर्पण- ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयं कर्ता त्राता भव भवार्णवात् ।।
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ।।
अनेन फलदानेन फलदोऽस्तु सदा मम ।

## कलशमा पञ्चायतन आदि देवताहरूको पूजन

गणेशपूजनपछि कलशको मुखमा चामल राखी त्यसमा पैसा, प्रतिमा वा सुपारी राखेर गणपत्यादि वनस्पत्यन्त देवताहरूको क्रमैले आवाहन गरी पूजा गर्नुपर्दछ ।

ॐ भूर्भुवः स्वः साङ्गाः सपरिवाराः सायुधाः, सवाहना गणपतिसूर्यदेवीशिवविष्णुप्रभृतयः देवाः इह आगच्छन्तु, इहतिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु । ॐ गणपतये नमः, ॐ सूर्याय नमः, ॐ देव्यै नमः, ॐ नमः शिवाय, ॐ विष्णवे नमः इति पाञ्चायनदेवताभ्यो नमः । ॐ विनायकाय नमः, ॐ दुर्गायै नमः, ॐ वायवे नमः, ॐ आकाशाय नमः, ॐ अश्विनीकुमाराभ्यां नमः, इति विनायकादिपञ्चलोकपालेभ्यो नमः । ॐ सूर्याय नमः, ॐ सोमाय नमः, ॐ भौमाय नमः, ॐ बुधाय नमः, ॐ बृहस्पतये नमः, ॐ शुक्राय नमः, ॐ शनये नमः, ॐ राहवे नमः, ॐ केतवे नमः, इति सूर्यादिनवग्रहेभ्यो नमः । ॐ ईश्वराय नमः, ॐ उमायै नमः, ॐ स्कन्दाय नमः, ॐ

हरये नमः, ॐ ब्रह्मणे नमः, ॐ इन्द्राय नमः, ॐ यमाय नमः, ॐ कालाय नमः, ॐ चित्रगुप्ताय नमः, इति नवाधिदेवताभ्यो नमः । ॐ अग्नये नमः, ॐ अद्भ्यो नमः, ॐ भूम्यै नमः, ॐ विष्णवे नमः, ॐ इन्द्राय नमः, ॐ इन्द्राण्यै नमः, ॐ प्रजापतये नमः, ॐ सर्पेभ्यो नमः, ॐ ब्रह्मणे नमः, इति अग्न्यादिप्रत्यधिदेवेभ्यो नमः । ॐ इन्द्राय नमः, ॐ अग्नये नमः, ॐ यमाय नमः, ॐ निर्ऋतये नमः, ॐ वरुणाय नमः, ॐ वायवे नमः, ॐ सोमाय नमः, ॐ ईशानाय नमः, ॐ ब्रह्मणे नमः, ॐ अनन्ताय नमः, इति इन्द्रादिदशदिक्पालेभ्यो नमः । ॐ ध्रुवाद्यष्टवसिभ्यो नमः, ॐ धात्रादिद्वादशादित्येभ्यो नमः, ॐ वीरभद्राद्येकादशरुद्रेभ्यो नमः, ॐ गौर्यादिषोडशमातृभ्यो नमः, ॐ आवहादिसप्तमरुद्भ्यो नमः, ॐ विनायकब्रह्मविष्णुरुद्रार्कवनस्पतिभ्यो नमः ।

## धूप, दीप र नैवेद्य

कलशस्कन्धमा पूजा गरेपछि कर्ताले धूप-दीप-नैवेद्य समर्पण गर्नुपर्दछ ।

धूप - **ॐ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।** ॐ धूरसि धूर्वधूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः । देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ धूप अर्पण गरेपछि भगवान्लाई तलको मन्त्र पढी दीपदर्शन गराउनुपर्दछ।

दीपदर्शन- **ॐ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् । भक्त्यां दीपं प्रयच्छामि देवाय परमात्मने । त्राहि मां निरयाद् घोराद दीपज्योतिर्नमोऽस्तु ते।।** ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ दीप अर्पणपछि हात धोएर भगवान्लाई तलको मन्त्र पढी नैवेद्य अर्पण गर्नुपर्दछ । नैवेद्य अर्पण गर्दा धेनुमुद्रा देखाउनुपर्दछ ।

नैवेद्य - **ॐ नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च परां गतिम् ।। शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ।।** ॐ नाभ्या ऽआसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ ऽअकल्पयन्॥ **धूप, दीप, नैवेद्य समर्पण गरेपछि तलको मन्त्र पढ्दै जल अर्पण गर्नुपर्दछ ।**

जलार्पण- ॐ आपो हि ष्ठा मयोभुवस्ता न ऽऊर्जे दधातन । महे रणाय चक्षसे ॥

## विधिनिर्देश

श्रीगणेशपुराणका लागि गणेशादि पूजन गरिएको भए प्रारम्भ गर्ने दिन आभ्युदयिक श्राद्ध, मातृका पूजा, ग्रहपूजा, वास्तुपूजा, रुद्राभिषेक र सप्ताहमण्डपपूजाविधिले मण्डप पूजा सम्पन्न गरेपछि आराध्यदेवता श्रीगणेशको विधिवत् पूजन आरम्भ गर्नुपर्दछ। सामान्य गणेशपूजन भएमा माथि बताइएका पूजन आदि कार्य सम्पन्न गरेपछि स्वस्तिपाठ गरी सङ्कल्प गर्नुपर्दछ । तदनन्तर पूजाविधिअनुसार पूजा गर्नुपर्दछ ।

श्रीगणेशपुराण यज्ञका आराध्य देवता गणेशको पूजन निम्नानुसार गर्नुपर्दछ - मण्डपबाहिर दश दिक्पालका लागि रेखा हाल्ने र रेखीमाथि धानका टपरी राखेर घडा स्थापना गरी सप्ताहमण्डपपूजाविधिअनुसार दश दिक्पालका ध्वजा-

पताका, लिङ्गा आदि गाडी पूजा गर्ने विधान छ । यसपछि पुराणको पुस्तक शिरमा राखी कर्ताले पूर्णकलश लिई शङ्ख, घण्ट, चमर आदि लिएर जय–जयकार गर्दै तीन पटक मन्दिर प्रदक्षिणा गरी मन्दिरभित्र प्रवेश गर्नुपर्दछ । यसपछि प्रधान देवताको पूजाका लागि रेखी हालेको ठाउँमा धान, चामल, पूर्णकलश, पञ्चपल्लव इत्यादि राखेर कलशपूजाविधिले पूजा गर्नुपर्दछ । पुनः चामल राखी सर्वतोभद्र आदि यन्त्रहरू कपडामा लेखी त्यसको पनि पूजा गरी स्थालीमाथि ॐकार लेखेर चाँदीको सिंहासनमा प्रधानदेवताको सुनको प्रतिमा वा गणेशमूर्ति स्थापित गर्नुपर्दछ । त्यस प्रतिमालाई स्थापित गर्नुभन्दा पहिले अग्न्युत्तारण मन्त्र पढ्दै पञ्चगव्य र पञ्चामृतले शुद्ध पार्नुपर्दछ । यसपछि पुनः शुद्ध जलले पखाल्नुपर्दछ अनिमात्र मूर्ति स्थापना गरेर प्राणप्रतिष्ठा गर्ने विधान छ । त्यसपछि षोडशोपचारले भगवान्‌को मूर्तिको पूजा गरी पुस्तकको पूजा गर्नुपर्दछ र ब्राह्मणलाई चन्दन, अक्षता, माला, वस्त्रालङ्कार आदिले पूजा गर्नुपर्दछ । यस्तो पूजा हरेक दिन गर्नुपर्दछ ।

## यज्ञका आराध्य देवता श्रीगणेशको पूजन

धूप, दीप र नैवेद्य अर्पणपछि प्रधानदेवता श्रीगणेशको पूजाका लागि प्रतिज्ञासङ्कल्प गर्नुपर्दछ ।

सङ्कल्प – हरिः ॐ तत्सत् तत्सत् तत्सत् ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो पुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतैकदेशे अमुकनगरे अमुकग्रामे अमुकस्थाने वा बौद्धावतारे अमुकनामसंवत्सरे श्रीसूर्ये अमुकायने अमुकर्तौ महामाङ्गल्यप्रदमासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु च यथायथा-राशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा ( अमुकवर्मा अमुकगुप्तः ) अहं ममाभिलषितसिद्ध्यर्थं श्रीमद्गणेशप्रीत्यर्थमिहलोके सुखं भुक्त्वा परत्र स्वानन्दभुवनप्राप्त्यर्थञ्च यथामिलितोपचारैः अमुककर्माङ्गत्वेन श्रीगणेशादिदेवतापूजनञ्चाहं करिष्ये । यसरी सङ्कल्प गरिसकेपछि श्रीगणेशको ध्यान गर्नुपर्दछ ।

ध्यान – ॐ नवरत्नमयं द्वीपं स्मरेदिक्षुरसाम्बुधौ । तद्वीचिधौतपर्यन्तं मन्दमारुतसेवितम् ।।
मन्दारपारिजातादिकल्पवृक्षलताकुलम् । उद्धूतरत्नच्छायाभिररुणीकृतभूतलम् ।।
उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम् । तस्य मध्ये पारिजातं नवरत्नमयं स्मरेत् ।।
ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्धनैः । तस्याधस्तान्महापीठे रचिते मातृकाम्बुजे ।।
षट्कोणान्तस्त्रिकोणाढ्यं महागणपतिं स्मरेत् ।।
हस्तीन्द्राननमिन्दुचूडमरुणच्छायंत्रिनेत्रं रसाश्लिष्टं यत् प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् ।।
बीजापूरगदाधनुस्त्रिशिखियुक्चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशौ हस्तैर्वहन्तं भजे ।।
गण्डपालीगलद्दानपूरलालसमानसान् । द्विरेफान्कर्णतालाभ्यां वारयन्तम्मुहुर्मुहुः ।।
कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः । रत्नवर्षैः प्रीणयन्तं साधकं मदविह्वलम् ।
माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् ।।

## विधिनिर्देश

गणपतिको ध्यान गरेपछि साधकले आफ्ना सामु वेदी बनाई वेदीमाथि चौकीको स्थापना गर्नुपर्दछ । त्यसमाथि आधारशक्तिको पूजा गरेर पूर्व आदि दिशाहरूमा धर्म, ज्ञान, वैराग्य, ऐश्वर्य तथा अधर्म, अज्ञान, अवैराग्य र अनैश्वर्यको पूजा गर्नुपर्दछ । तदनन्तर पीठमा मूल देवताका निमित्त कलशको स्थापना गरी त्यसमाथि स्थाली राखी त्यसमा कमलको भावना गरी त्यसको कर्णिकामा गणपति देवताको प्रतिमालाई विराजमान बनाउनुपर्दछ । त्यसपछि निम्नानुसार प्राणप्रतिष्ठा आदि गर्नुपर्दछ।

**आधारशक्तिपूजन-** **ॐ आधारशक्तिकमलासनाय नमः** । यस मन्त्रले आधारशक्तिको पूजा गर्नुपर्दछ । त्यसपछि पूर्व आदि दिशामा **ॐ धर्माय नमः, ॐ ज्ञानाय नमः, ॐ वैराग्याय नमः, ॐ ऐश्वर्याय नमः, ॐ अधर्माय नमः, ॐ अज्ञानाय नमः, ॐ अवैराग्याय नमः, ॐ अनैश्वर्याय नमः** भनी धर्म आदिको पूजा गर्नुपर्दछ । त्यसपछि तल लेखिएका मन्त्रले गणेशको प्राणप्रतिष्ठा गर्नुपर्दछ।

**प्राणप्रतिष्ठा -** **ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च। अस्यै देवत्वमर्चायै मामहेति च कश्चन।।**
**सिद्धिबुद्धिसहितगणपते सुप्रतिष्ठितो वरदो भव ।**
ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु । विश्वेदेवास ऽइहमादयन्तामों३प्रतिष्ठ ।। प्राणप्रतिष्ठापछि पीठमा पीठ देवताहरूको पूजा गर्नुपर्दछ ।

**पीठपूजा-** **ॐ तीव्रायै नमः, ॐ ज्वालिन्यै नमः, ॐ नन्दायै नमः, ॐ भोगदायै नमः, ॐ कामरूपिण्यै नमः, ॐ सत्यायै नमः, ॐ उग्रायै नमः, ॐ तेजोवत्यै नमः, मध्ये ॐ विघ्नविनाशिन्यै नमः, ॐ सर्वशक्तिकमलासनाय नमः** ।

**आवाहन -** **ॐ हे हेरम्ब त्वमेह्येहि ह्यम्बिकात्र्यम्बकात्मज। सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभयुतः पितः।।**
**नागास्यं नागहारं त्वां गणराजं चतुर्भुजम् । भूषितं स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ।।**
**आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां यागं च रक्ष मे ।।**
ॐ गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ।।
**ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय गणपतये नमः, गणपतिमावाहयामि स्थापयामि ।**
आवाहनपछि तल लेखिएका मन्त्र पढेर भगवान् श्रीगणेशलाई आसनरूप पुष्प अर्पण गर्नुपर्दछ ।

**आसन-अर्पण -** **ॐ विचित्ररत्नखचितं दिव्यास्तरणसंयुतम् । स्वर्णसिंहासनं चारु गृह्णीष्व सुरपूजित ।।**
ॐ पुरुष ऽएवेदं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।
**ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, आसनं समर्पयामि** । आसन समर्पण गरेपछि तल लेखिएका मन्त्रहरूद्वारा भगवान् श्रीगणेशलाई पादप्रक्षालनार्थ पाद्य अर्पण गर्नुपर्दछ।

**पाद्य - अर्पण -** **ॐ सर्वतीर्थसमुद्भूतं पाद्यं गन्धादिभिर्युतम् । विघ्नराज गृहाणेदं भगवन् भक्तवत्सल ।।**
एतावानस्य महिमातो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।।

ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः पादयोः पाद्यं समर्पयामि । पाद्य अर्पण गरेपछि श्रीगणेशलाई निम्नानुसार मन्त्र पढ्दै अर्घ्यजल अर्पण गर्नुपर्दछ ।

अर्घ्य-अर्पण - ॐ गणाध्यक्ष नमस्तेऽस्तु गृहाण करुणाकर । अर्घ्यं च फलसंयुक्तं गन्धमाल्याक्षतैर्युतम्।।
ॐ त्रिपादूर्ध्व उउदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, हस्तयोरर्घ्यं समर्पयामि । अर्घ्य अर्पणपछि गङ्गाजलद्वारा निम्नानुसारका मन्त्र पढ्दै भगवान्‌लाई आचमनीय अर्पण गर्नुपर्दछ ।

आचमनीयार्पण- ॐ विनायक नमस्तुभ्यं त्रिदशैरभिवन्दित । गङ्गोदकेन देवेश कुरुष्वाचमनं प्रभो ।।
ॐ ततो विराडजायत विराजो ऽअधि पूरुषः । स जातो ऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, मुखे आचमनीयं समर्पयामि । आचमनीय अर्पणपछि निम्नलिखित मन्त्र पाठ गर्दै गङ्गाजलले नुहाएको भावना गरेर स्नानीय जल अर्पण गर्नुपर्दछ।

स्नानीय-समर्पण- ॐ मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् । तदिदं कल्पितं देव स्नानार्थं प्रतिगृह्यताम्।।
ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् । पशूंस्ताश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, सर्वाङ्गे स्नानं समर्पयामि । स्नानीय समर्पणपछि तल लेखिएका मन्त्र पढेर पञ्चामृतद्वारा गणपतिलाई स्नान गराउनुपर्दछ ।

पञ्चामृत-स्नान - ॐ पञ्चामृतं मयाऽऽनीतं पयो दधि घृतं मधु । शर्करा च समायुक्तं स्नानार्थं प्रतिगृह्यताम्।।
ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः पञ्चामृतस्नानं समर्पयामि । पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । पञ्चामृत स्नान गराएपछि दूध, दही, घिउ, शर्कराद्वारा छुट्टाछुट्टै स्नान गराउनुपर्दछ ।

पयःस्नान- ॐ कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ।।
ॐ पयः पृथिव्यां पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, पयःस्नानं समर्पयामि । पयःस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

दधिस्नान - ॐ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ।।
ॐ दधिक्राव्णो ऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्रण ऽआयूꣳषि तारिषत्।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, दधिस्नानं समर्पयामि । दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

घृतस्नान - नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ।।
ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, घृतस्नानं समर्पयामि। घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

मधुस्नान - ॐ पुष्परेणुसमुद्भूतं सुस्वादु मधुरं मधु । तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ।।
ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ।। ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता ।। ॐ मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, मधुस्नानं समर्पयामि । मधुस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शर्करास्नान - ॐ इक्षुसारसमुद्भूता शर्करा पुष्टिदा शुभा । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ।।
ॐ अपां रसमुद्वयसं सूर्ये सन्तं समाहितम् । अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।। (यजु. ९/३)
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, शर्करास्नानं समर्पयामि । शर्करास्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

सुगन्धतैलस्नान - ॐ चम्पकाशोकबकुलमालतीमोगरादिभिः । वासितं स्निग्धताहेतु तैलं चारु प्रगृह्यताम्।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, सुवासितं तैलं समर्पयामि । तैलस्नान गराइसकेपछि भगवान्लाई शुद्ध जलले नुहाइदिनु पर्दछ ।

शुद्धोदकस्नान - गङ्गा च यमुना चैव गोदावरी सरस्वती । नर्मदा सिन्धुः कावेरी स्नानार्थं प्रतिगृह्यताम् ।।
ॐ आपो हि ष्ठा मयोभुवस्ता न ऽऊर्जे दधातन । महे रणाय चक्षसे ।। (यजु. ११/५०)
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, शुद्धोकस्नानं समर्पयामि । शुद्धोदकस्नान गराइसकेपछि भगवान्लाई तलको मन्त्र पढ्दै वस्त्र अर्पण गर्नुपर्दछ ।

वस्त्रसमर्पण - ॐ शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् । देहालंकरणं वस्त्रमतः शान्तिं प्रयच्छ मे।।
ॐ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः ।। ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, वस्त्रं समर्पयामि । ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, आचमनं समर्पयामि । वस्त्र अर्पण गरिसकेपछि भगवान्लाई तलको मन्त्र पढ्दै उपवस्त्र अर्थात् उत्तरीय वस्त्र अर्पण गर्नुपर्दछ ।

उपवस्त्रसमर्पण - ॐ उत्तरीयं तथा देव नानाचित्रितमुत्तमम् । गृहाणेदं मया भक्त्या दत्तं तत् सफलीकुरु ।।
ॐ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः । वासो ऽअग्ने विश्वरूपं संव्ययस्व विभावसो।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, उपवस्त्रं समर्पयामि । तदन्ते आचमनीयं समर्पयामि। ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, वस्त्रोपवस्त्रार्थे रक्तसूत्रं समर्पयामि। उपवस्त्र समर्पणपछि भगवान्को अलङ्कारका लागि तलको मन्त्र पढ्दै अक्षता अर्पण गर्नुपर्दछ ।

अलङ्कार-माला - ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, अलङ्करणार्थमक्षतान् समर्पयामि । अलङ्करण (अक्षता) अर्पण गरेपछि तलका मन्त्रहरू पढ्दै भगवान्लाई यज्ञोपवीत चढाउनु पर्दछ ।

यज्ञोपवीतार्पण - ॐ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया दत्तं गृहाण परमेश्वर ।।

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, यज्ञोपवीतं समर्पयामि ।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, आचमनं समर्पयामि । यज्ञोपवीत अर्पण गरेपछि भगवान्‌लाई तलका मन्त्र पढी श्रीखण्ड चन्दन चढाउनुपर्दछ ।

गन्धसमर्पण - ॐ श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ।।
ॐ त्वां गन्धर्वा ऽअखनस्त्वामिन्द्रस्त्वां बृहस्पतिः । त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत॥
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, गन्धं समर्पयामि । श्रीखण्ड चन्दन चढाएपछि तलका मन्त्र पढी भगवान्‌लाई कुंकुमादि रङ्गले रङ्गिएका सुन्दर अक्षता अर्पण गर्नुपर्दछ ।

अक्षतासमर्पण - ॐ अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर।।
ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, अक्षतान् समर्पयामि । अक्षता अर्पण गरेपछि मालती आदि पुष्पहरूबाट उनिएका सुन्दर माला तलका मन्त्र पढ्दै अर्पण गर्नुपर्दछ।

पुष्प-माल्यार्पण - ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो। मयाहृतानि पुष्पाणि गृह्यन्तां पूजनाय भोः।।
ॐ ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः । अश्वा ऽइव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, पुष्पमालां समर्पयामि । पुष्पमाला अर्पणपछि तलका मन्त्र पढ्दै मन्दार आदि वृक्षमा फुलेका फूलहरू अर्पण गर्नुपर्दछ ।

मन्दारपुष्पार्पण- ॐ वन्दारुजनमन्दार मन्दारप्रिय धीपते । मन्दारजातिपुष्पाणि श्वेतार्कादीन्युपेहि भोः ।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, मन्दारपुष्पाणि समर्पयामि ।
मन्दारपुष्प अर्पण गरेपछि तलका मन्त्रहरूद्वारा शमीपत्रले पूजा गर्नुपर्दछ ।

शमीपत्रसमर्पण ॐ त्वत्प्रियाणि सुपुष्पाणि कोमलानि शुभानि वै । शमीदलानि हेरम्ब गृहाण गणनायक।।
ॐ य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्ज्ञमाशत ।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, शमीपत्राणि समर्पयामि । शमीपत्र अर्पण गरेपछि दूर्वाङ्कुर अर्पण गरी पूजा गर्नुपर्दछ ।

दूर्वाङ्कुरार्पण- ॐ दूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान् । आनीतांस्तव पूजार्थं गृहाण गणनायक।।
ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, दूर्वाङ्कुरान् समर्पयामि । दूर्वाङ्कुरसमर्पणपछि तलका मन्त्र पढ्दै २१ थरि पुष्प अर्पण गर्नुपर्दछ ।

२१ पुष्पार्पण - ॐ सुमुखाय नमः जातीपुष्पं समर्पयामि, ॐ गणाधिपाय० शतपत्रपुष्पं स०, ॐ कपिलाय० यूथिकापुष्पं स०, ॐ गजकर्णाय० चम्पकपुष्पं स०, ॐ लम्बोदराय० कह्लारपुष्पं स०, ॐ विकटाय० केतकीपुष्पं स०, ॐ विघ्ननाशिने० बकुलपुष्पं स०, ॐ विनायकाय० जपापुष्पं स०, ॐ धूम्रकेतवे० पुन्नागपुष्पं स०, ॐ गणाध्यक्षाय० धत्तूरपुष्पं स०, ॐ भालचन्द्राय० मातुलिङ्गपुष्पं स०, ॐ पत्नीहिताय० विष्णुक्रान्तापुष्पं स०, ॐ उमापुत्राय० करवीरपुष्पं स०,

ॐ **गजाननाय०** पारिजातपुष्पं स०, ॐ **ईशपुत्राय०** कमलपुष्पं स०, ॐ **सर्वसिद्धिप्रदाय०** गोकर्णिकापुष्पं स०, ॐ **मूषकवाहनाय०** कुमुदपुष्पं स०, ॐ **कुमारगुरवे०** तगरपुष्पं स०, ॐ **दीर्घशुण्डाय०** सुगन्धिराजपुष्पं स०, ॐ **अगस्तिपुत्राय०** अगस्तिपुष्पं स०, ॐ **सङ्कटनाशनाय** नमः पाटलापुष्पं समर्पयामि । २१ थरि पुष्प अर्पण गरेपछि भगवान्‌लाई निम्न मन्त्र पढ्दै मालती आदि २१ थरि पत्र अर्पण गर्नुपर्दछ ।

२१ पत्रार्पण - ॐ **सुमुखाय नमः** मालतीपत्रं समर्पयमि, ॐ **गणाधिपाय०** भृङ्गराजपत्रं स०, ॐ **उमापुत्राय०** विल्वपत्रं स०, ॐ **गजाननाय०** श्वेतदूर्वापत्रं स०, ॐ **लम्बोदराय०** बदरीपत्रं स०, ॐ **हरसूनवे०** धत्तूरपत्रं स०, ॐ **गजकर्णाय०** तुलसीपत्रं स०, ॐ **वक्रतुण्डाय०** शमीपत्रं स०, ॐ **गुहाग्रजाय०** अपामार्गपत्रं स०, ॐ **एकदन्ताय०** बृहतीपत्रं स०, ॐ **विकटाय०** करवीरपत्रं स०, ॐ **कपिलाय०** अर्कपत्रं स०, ॐ **गजदन्ताय०** अर्जुनपत्रं स०, ॐ **विघ्नराजाय०** विष्णुकान्तापत्रं स०, ॐ **बटवे०** दाडिमीपत्रं स०, ॐ **सुराग्रजाय०** देवदारुकपत्रं स०, ॐ **भालचन्द्राय०** मरुवकपत्रं स०, ॐ **हेरम्बाय०** अश्वत्थ (सिन्दुवार) पत्रं स०, ॐ **चतुर्भुजाय०** जातीपत्रं स०, ॐ **विनायकाय०** केतकी (अश्मन्तक) पत्रं स०, ॐ **सर्वेश्वराय नमः** अगस्तिपत्रं समर्पयामि । २१ थरि पत्र अर्पण गरिसकेपछि तलका २१ मन्त्र पढ्दै क्रमशः २१ दूर्वार्पण गर्नुपर्दछ ।

२१ दूर्वार्पण - **ॐ गणाधिपतये नमः ।।१।। ॐ उमापुत्राय नमः ।।२।। ॐ अघनाशनाय नमः ।।३।। ॐ एकदन्ताय नमः ।।४।। ॐ इभवक्त्राय नमः ।।५।। ॐ मूषकवाहनाय नमः ।।६।। ॐ विनायकाय नमः ।।७।। ॐ ईशपुत्राय नमः ।।८।। ॐ सर्वसिद्धिप्रदाय नमः ।।९।। ॐ लम्बोदराय नमः ।।१०।। ॐ वक्रतुण्डाय नमः ।।११।। ॐ मोदकप्रियाय नमः ।।१२।। ॐ विघ्नविध्वंसकर्त्रे नमः ।।१३।। ॐ विश्ववन्द्याय नमः ।।१४।। ॐ अमरेशाय नमः ।।१५।। ॐ गजकर्णाय नमः ।।१६।। ॐ नागयज्ञोपवीतिने नमः ।।१७।। ॐ भालचन्द्राय नमः ।।१८।। ॐ परशुधारिणे नमः ।।१९।। ॐ विघ्नाधिपाय नमः ।।२०।। ॐ विद्याप्रदाय नमः ।।२१।।** २१ दूर्वार्पण गरेपछि भगवान्‌को अङ्ग पूजा गर्नुपर्दछ ।

अङ्गपूजा - ॐ **गणेश्वराय नमः** पादौ पूजयामि, ॐ **विघ्नराजाय नमः** जानुनी पू०, ॐ **आखुवाहनाय नमः** ऊरू पू०, ॐ **हेरम्बाय नमः** कटी पू०, ॐ **कामारिसूनवे नमः** नाभिं पू०, ॐ **लम्बोदराय नमः** उदरं पू०, ॐ **गौरीसुताय नमः** स्तनौ पू०, ॐ **गणनायकाय नमः** हृदयं पू०, ॐ **स्थूलकण्ठाय नमः** कण्ठं पू०, ॐ **स्कन्दाग्रजाय नमः** स्कन्धौ पू०, ॐ **पाशहस्ताय नमः** हस्तान् पू०, ॐ **गजवक्त्राय नमः** वक्त्रं पू०, ॐ **विघ्नहर्त्रे नमः** ललाटं पू०, ॐ **सर्वेश्वराय नमः** शिरः पूजयामि । अङ्गपूजापछि भगवान्‌लाई निम्न मन्त्र पढ्दै सिन्दूर आदि सौभाग्यद्रव्य अर्पण गर्नुपर्दछ ।

सिन्दूरादि अर्पण - **ॐ सिन्दूरं शोभनं रक्तं सौभाग्यं सुखवर्धनम् । शुभदं कामदं चैव सिन्दूरं प्रतिगृह्यताम् ।। ॐ सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा ऽअरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, सिन्दूर**

समर्पयामि । सिन्दूर अर्पणपछि भगवान्लाई थरि-थरिका द्रव्यहरूद्वारा निर्मित, सुगन्धित, अबीर चढाउनु पर्दछ ।

नाना परिमलद्रव्य- ॐ नानापरिमलैर्द्रव्यैर्निर्मितं चूर्णमुत्तमम् । अबीरनामकं चूर्णं गन्धाढ्यं चारु गृह्यताम् ।। ॐ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परिपातु विश्वतः ॥ ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, नाना-परिमलद्रव्याणि समर्पयामि । नाना परिमलद्रव्य अर्पण गरेपछि भगवान्लाई तलको मन्त्र पढी धूप अर्पण गर्नुपर्दछ।

धूपसमर्पण - ॐ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।। ॐ धूरसि धूर्वधूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः । देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, धूपमाघ्रापयामि। धूप अर्पण गरेपछि भगवान्लाई तलको मन्त्र पढी दीपदर्शन गराउनुपर्दछ ।

दीपदर्शन - ॐ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् । भक्त्या दीपं प्रयच्छामि देवाय परमात्मने । त्राहि मां निरयाद् घोराद् दीपज्योतिर्नमोऽस्तु ते।। ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, दीपं दर्शयामि । दीप दर्शन गराएपछि हात धोएर भगवान्लाई तलको मन्त्र पढी मोदक आदि नैवेद्य अर्पण गर्नुपर्दछ । नैवेद्य अर्पण गर्दा धेनुमुद्रा देखाउनुपर्दछ।

मोदकादिनैवेद्य - ॐ नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च परां गतिम् ।।
निवेदन शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ।। ॐ नाभ्या ऽआसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ ऽअकल्पयन् ॥ ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, नैवेद्यं मोदकमयं ऋतुफलानि च समर्पयामि । ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, आचमनीयं मध्ये पानीयं उत्तरापोशनं च समर्पयामि। नैवेद्य ग्रहण गर्नुहुने भगवान्का हातहरूलाई निर्मल र पवित्र तुल्याउन गरिने करोद्वर्तनका लागि तलका मन्त्र पढी चन्दन अर्पण गर्नुपर्दछ ।

करोद्वर्तन - ॐ चन्दनं मलयोद्भूतं कस्तूर्यादिसमन्वितम् । करोद्वर्तनकं देव गृहाण परमेश्वर ।। अꣳशुना ते अꣳशुः पृच्यतां परुषा परुः । गन्धस्ते सोममवतु मदाय रसो ऽअच्युतः ॥ ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, चन्दनेन करोद्वर्तनं समर्पयामि । चन्दन अर्पण गरेपछि तलका मन्त्र पढी पूगीफल आदिसहित ताम्बूल अर्पण गर्नुपर्दछ ।

पूगीफलार्पण - ॐ पूगीफलं महद् दिव्यं नागवल्लीदलैर्युतम् । एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम्।।

ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म ऽइध्मः शरद्धविः ॥

**ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, मुखवासार्थमेलापूगीफलादिसहितं ताम्बूलं समर्पयामि।** पूगीफल आदि अर्पणपछि भगवान्‌लाई प्रसन्न तुल्याउन तलका मन्त्र पढ्दै फलको रूपमा नरीवल अर्पण गर्नुपर्दछ ।

नारिकेलार्पण - **ॐ इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ।।**

ॐ याः फलिनीर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वं हसः॥

**ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, नारिकेलफलं समर्पयामि ।** नारिकेलफलको अर्पण गरेपछि कर्ताले पूजाको सफलताका निमित्त जौ, तिल, अक्षता, दूबो, पुष्प, बेलपत्र र वत्तीको १०८ वा २१ सङ्ख्यामा गनौटा चढाउनुपर्दछ ।

गणितवस्तु समर्पण - **हरिः ॐ तत्सत् तत्सत् तत्सत् ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो पुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतैकदेशे अमुकनगरे अमुकग्रामे अमुकस्थाने वा बौद्धावतारे अमुकनामसंवत्सरे श्रीसूर्ये अमुकायने अमुकर्तौ महामाङ्गल्यप्रदमासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु च यथायथा-राशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा ( अमुकवर्मा अमुकगुप्तः ) अहं कृतायाः गणेशपूजायाः साद्गुण्यार्थं श्रीमद्गणेशप्रीत्यर्थञ्च एतान् अष्टोत्तरशतसङ्ख्याकान् अथवा एकविंशतिसङ्ख्याकान् यवान्, एतान् अष्टोत्तरशतसङ्ख्याकान् अथवा एकविंशतिसङ्ख्याकान् तिलान्, एतान् अष्टोत्तरशतसङ्ख्याकान् अथवा एकविंशतिसङ्ख्याकान् अक्षतान्, एता अष्टोत्तरशतसङ्ख्याका अथवा एकविंशतिसङ्ख्याका दूर्वाः, एतानि अष्टोत्तरशतसङ्ख्याकानि अथवा एकविंशतिसङ्ख्याकानि पुष्पाणि, एतानि अष्टोत्तरशतसङ्ख्याकानि अथवा एकविंशति-सङ्ख्याकानि विल्वपत्राणि, एतानि अष्टोत्तरशतयुग्माणि अथवा एकविंशतियुग्माणि दीपदलानि च भगवते श्रीगणेशाय समर्पये, न मम ।**

यसपछि तलका मन्त्र पढ्दै भगवान्‌लाई दक्षिणा द्रव्य अर्पण गर्नुपर्दछ ।

दक्षिणाद्रव्यसमर्पण- **ॐ हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।।**

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक ऽआसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

**ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, कृतायाः पूजायाः साद्गुण्यार्थं द्रव्यदक्षिणां समर्पयामि ।** दक्षिणा अर्पण गरिसकेपछि तलका मन्त्रहरू पढेर कपूर बाली नीराजन गर्नुपर्दछ ।

नीराजन( आरती )- **ॐ कदलीगर्भसम्भूतं कर्पूरं तु प्रदीपितम् । आरार्तिकमहं कुर्वे पश्य मे वरदो भव ।।**

ॐ इदं हविः प्रजननं मे ऽअस्तु दशवीरं सर्वगणं स्वस्तये । आत्मसनि प्रजासनि पशुसनि

लोकसन्त्वभयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो ऽअस्मासु धत्त। । ॐ आरात्रि पार्थिवं रजः पितुरप्रायि धामभिः । दिवः सदां सि बृहती वितिष्ठस ऽआ त्वेषं वर्तते तमः ॥

ॐ मुदा करात्तमोदकं सदा विमुक्तिसाधकं कलाधरावतंसकं विलासिलोकरञ्जकम् ।
अनायकैकनायकं विनाशितेभदैत्यकं नताशुभाशुनाशकं नमामि तं विनायकम् ।।
नतेतरातिभीकरं नवोदितार्कभास्वरं नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं महेश्वरं तमाश्रये परात्परं निरन्तरम् ।।
समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरं दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं नमस्करं नमस्कृतां नमस्करोमि भास्वरम् ।।
अकिञ्चनार्तिमार्जनं चिरन्तनोक्तिभाजनं पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ।
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणं कपोलदानवारणं भजे पुराणवारणम् ।।
नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजमचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम् ।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां तमेकदन्तमेव तं विचिन्तयामि सन्ततम् ।।
महागणेशपञ्चरत्नमादरेण योऽन्वहं प्रगायति प्रभातके हृदि स्मरन् गणेश्वरम् ।
अरोगतामदोषतां सुसाहितीं सुपुत्रतां समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ।।
ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, कर्पूरनीराजनं समर्पयामि ।

आरतीपछि तलका मन्त्र पढी पुष्पाञ्जलि चढाउनु पर्दछ ।

पुष्पाञ्जलि समर्पण- ॐ नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च । पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर ।।
ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥ प्राणाय स्वाहा ऽअपानाय स्वाहा व्यानाय स्वाहा । अम्बे ऽअम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥

ॐ राजाधिराजाय प्रसह्यसाहिने नमो वयं वैश्रवणाय कुर्महे ।
स मे कामान् कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु ।।
ॐ कुबेराय वैश्रवणाय महाराजाय नमः ।

ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुषान्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ।

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव ऽएकः ॥

ॐ तत्कराटाय विद्महे श्रीगणेशाय धीमहि तन्नो दन्ती प्रचोदयात् ।

नानासुगन्धपुष्पाणि यथाकालोद्भवानि च । पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर ।।

ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, मन्त्रपुष्पाञ्जलिं समर्पयामि ।

पुष्पाञ्जलि अर्पण गरेपछि तलका मन्त्र पढी जल घुमाएर भगवान्लाई प्रदक्षिणा अर्पण गर्नुपर्दछ।

प्रदक्षिणा - ॐ यानि कानि च पापानि ज्ञाताज्ञातकृतानि च । तानि सर्वाणि नश्यन्ति प्रदक्षिणा पदे पदे ।।

ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ।।

ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः, प्रदक्षिणां समर्पयामि ।

प्रदक्षिणापछि प्रचलित पद्धतिअनुसार पूर्णपात्र एवं दक्षिणा गर्नुपर्दछ ।

**श्रीगणेशसहस्रनाम स्तोत्रद्वारा सहस्रदूर्वा अथवा मन्दारपुष्प अथवा शमीपत्र समर्पण**

यसै पूजाविधिको अन्त्यमा निर्दिष्ट श्रीगणेशसहस्र नाममन्त्रहरूद्वारा श्रीगणेशलाई हजार सङ्ख्या दूबो अथवा हजार मन्दारपुष्प अथवा हजार शमीपत्र अर्पण गर्नुपर्दछ ।

## पूर्णपात्र एवं दक्षिणा

सङ्कल्प - हरिः ॐ तत्सत् तत्सत् तत्सत् ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो पुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतैकदेशे अमुकनगरे अमुकग्रामे अमुकस्थाने वा बौद्धावतारे अमुकनामसंवत्सरे श्रीसूर्ये अमुकायने अमुकर्तौ महामाङ्गल्यप्रदमासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु च यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा ( अमुकवर्मा अमुकगुप्त ) अहं श्रीगणेशपुराणयज्ञस्य साङ्गतासिद्ध्यर्थं पूर्णपात्रममुकगोत्राय अमुकशर्मणे सुपूजिताय ब्राह्मणाय तथा भूयसीदक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यः कन्याकुमारिभ्यश्च यथायोग्यभागं विभज्य दातुमहमुत्सृजे हरि ॐ तत्सत् न मम । श्रीगणेशार्पणमस्तु ।

पूर्णपात्र र दक्षिणा सङ्कल्पपछि जल, चन्दन, अक्षता, फल, फूल, दूबो र दक्षिणा एउटा तामाको भाँडोमा राखी आफ्ना दुबै घुँडाले पृथ्वीमा टेकेर उक्त अर्घ्यपात्रलाई आफ्नो अञ्जलिमा धारण गर्नुपर्दछ । त्यसपछि त्यसलाई आफ्नो मस्तकमा छुवाउँदै तलका श्लोकहरू पढी श्रीगणपतिलाई विशेषार्घ्य अर्पण गर्नुपर्दछ ।

## विशेषार्घ्यसमर्पण

ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयं कर्ता त्राता भव भवार्णवात् ।

द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ।।

अनेन सफलार्घ्येण सफलोऽस्तु सदा मम । ॐ सिद्धिबुद्धिसहिताय महागणपतये नमः ।
विशेषार्घ्यं समर्पयामि । विशेषार्घ्यसमर्पणपश्चात् भूयसी दक्षिणा गर्नुपर्दछ ।

## क्षमाप्रार्थना

ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ।
नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ।।
भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय ।
विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ।।
नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः ।।
विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ।।
लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।।
त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति फलप्रदेति ।
विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ।।
गणेशपूजने कर्म यन्न्यूनमधिकं कृतम् । तेन सर्वेण सर्वात्मा प्रसन्नोऽस्तु सदा मम ।।
इत्यक्षरं पदं भ्रष्टं मात्राहीनञ्च यद् भवेत् । तत्सर्वं क्षम्यतां देव प्रसीद श्रीगणेश्वर! ।।
आवाहनं न जानामि न जानामि विसर्जनम् । पूजाञ्चैव न जानामि क्षमस्व परमेश्वर ।
अनया पूजया सिद्धिबुद्धिसहितो महागणपतिः प्रीयतां न मम ।



## श्रीमहागणपतिसहस्त्रनामावलिः

**विधिनिर्देशः** – यजमानः पूर्वाभिमुखमुपविश्य, आचम्य, प्राणानायम्य, दक्षिणहस्ते जलाऽक्षतपुष्पद्रव्याण्यादाय सङ्कल्पं कुर्यात् ।

**सङ्कल्पः**

अद्येत्यादिपूर्वोच्चरितविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुति–स्मृति–पुराणोक्तफलप्राप्त्यर्थं तथा ऐहिकाऽऽमुष्मिकसमस्तसद्विषयोपभोगप्राप्तये च सहस्रदूर्वापूजनकल्पोक्तफलप्राप्तिद्वारा ऋद्धिसिद्धिसहित-श्रीमहागणपतिप्रीत्यर्थं सहस्रनामभिः सहस्रदूर्वाङ्कुरैः, अथवा सहस्रशमीपत्रैः, अथवा सहस्रमन्दारपुष्पैः पूजनमहं करिष्ये, इत्युच्चार्य भूमौ जलं क्षिपेत् ।

**विधिनिर्देशः** – पुनर्हस्ते जलं गृहीत्वा विनियोगं कुर्यात् ।

**विनियोगः**

ॐ अस्य श्रीमहागणपतिसहस्त्रनामस्तोत्रमन्त्रस्य महागणपतिऋषिः, अनुष्टुप्छन्दः, गं बीजम्, हुँ शक्तिः, स्वाहेति कीलकम्, करादिन्यासे हृदयादिन्यासे च विनियोगः, इति पठित्वा भूमौ जलं प्रक्षिपेत् ।

**न्यासः**

**करादिन्यासः** – ॐ गां अङ्गुष्ठाभ्यां नमः, ॐ गीं तर्जनीभ्यां नमः, ॐ गूं मध्यमाभ्यां नमः, ॐ गैं अनामिकाभ्यां नमः, ॐ गौं कनिष्ठिकाभ्यां नमः, ॐ गः करतलकरपृष्ठाभ्यां नमः, इत्युच्चार्य करादिन्यासं कुर्यात्।

**हृदयादिन्यासः** – ॐ गां हृदयाय नमः, ॐ गीं शिरसे स्वाहा, ॐ गूं शिखायै वषट्, ॐ गैं कवचाय हुम्, ॐ गौं नेत्रत्रयाय वौषट्, ॐ गः अस्त्राय फट्, इत्युच्चार्य हृदयादिन्यासं कुर्यात् ।

**ध्यानम्**

**पञ्चवक्त्रो दशभुजो भालचन्द्रः शशिप्रभः । मुण्डमालः सर्पभूतो मुकुटाङ्गदभूषणः ।।१।।**
**अग्न्यर्कशशिनो भाभिस्तिरस्कुर्वन् दशायुधः । पार्वतीतनयं देवं श्रीगणेशं नमाम्यहम् ।।२।।**
**वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ।।३।।**

**सम्पूजकानां परिपालकानां जितेन्द्रियाणां च तपोधनानाम् ।**
**देशे च राष्ट्रे च कुले च राज्ञः करोतु शान्तिर्भगवान् गणेशः ।।४।।**

इति न्यासं ध्यानं च कृत्वा ॐ गं गणपतये नमः इति मूलमन्त्रमष्टोत्तरशतं प्रजप्य गणपतिसहस्त्रनामावलीं पठेत् । अन्तेऽपि मूलमन्त्रमष्टोत्तरशतं प्रजपेत् । पुनः षोडशोपचारैः पञ्चोपचारैर्वा गणपतिं सम्यक् सम्पूज्य गणपत्यथर्वशीर्षपाठं कुर्यात् ।

# श्रीगणेशसहस्त्रनामस्तोत्रम्

१. ॐ गणेश्वराय नमः
२. ॐ गणक्रीडाय नमः
३. ॐ गणनाथाय नमः
४. ॐ गणाधिपाय नमः
५. ॐ एकदंष्ट्राय नमः
६. ॐ वक्रतुण्डाय नमः
७. ॐ गजवक्त्राय नमः
८. ॐ महोदराय नमः
९. ॐ लम्बोदराय नमः
१०. ॐ धूम्रवर्णाय नमः
११. ॐ विकटाय नमः
१२. ॐ विघ्ननायकाय नमः
१३. ॐ सुमुखाय नमः
१४. ॐ दुर्मुखाय नमः
१५. ॐ बुद्धाय नमः
१६. ॐ विघ्नराजाय नमः
१७. ॐ गजाननाय नमः
१८. ॐ भीमाय नमः
१९. ॐ प्रमोदाय नमः
२०. ॐ आमोदाय नमः
२१. ॐ सुरानन्दाय नमः
२२. ॐ मदोत्कटाय नमः
२३. ॐ हेरम्बाय नमः
२४. ॐ शम्बराय नमः
२५. ॐ शम्भवे नमः
२६. ॐ लम्बकर्णाय नमः
२७. ॐ महाबलाय नमः
२८. ॐ नन्दनाय नमः
२९. ॐ अलम्पटाय नमः
३०. ॐ अभीरवे दमः
३१. ॐ मेघनादाय नमः
३२. ॐ गणञ्जयाय नमः
३३. ॐ विनायकाय नमः
३४. ॐ विरूपाक्षाय नमः
३५. ॐ धीरशूराय नमः
३६. ॐ वरप्रदाय नमः
३७. ॐ महागणपतये नमः
३८. ॐ बुद्धिप्रियाय नमः
३९. ॐ क्षिप्रप्रसादनाय नमः
४०. ॐ रुद्रप्रियाय नमः
४१. ॐ गणाध्यक्षाय नमः
४२. ॐ उमापुत्राय नमः
४३. ॐ अघनाशनाय नमः
४४. ॐ कुमारगुरवे नमः
४५. ॐ ईशानपुत्राय नमः
४६. ॐ मूषकवाहनाय नमः
४७. ॐ सिद्धिप्रियाय नमः
४८. ॐ सिद्धिपतये नमः
४९. ॐ सिद्धाय नमः
५०. ॐ सिद्धिविनायकाय नमः
५१. ॐ अविघ्नाय नमः
५२. ॐ तुम्बुरवे नमः
५३. ॐ सिंहवाहनाय नमः
५४. ॐ मोहिनीप्रियाय नमः
५५. ॐ कटङ्कटाय नमः
५६. ॐ राजपुत्राय नमः
५७. ॐ शालकाय नमः
५८. ॐ सम्मिताय नमः
५९. ॐ अमिताय नमः
६०. ॐ कूष्माण्डसामसम्भूतये नमः
६१. ॐ दुर्जयाय नमः
६२. ॐ धूर्जयाय नमः
६३. ॐ जयाय नमः
६४. ॐ भूपतये नमः
६५. ॐ भुवनपतये नमः
६६. ॐ भूतानाम्पतये नमः
६७. ॐ अव्ययाय नमः
६८. ॐ विश्वकर्त्रे नमः
६९. ॐ विश्वमुखाय नमः
७०. ॐ विश्वरूपाय नमः
७१. ॐ निधये नमः
७२. ॐ घृणये नमः
७३. ॐ कवये नमः
७४. ॐ कवीनामृषभाय नमः
७५. ॐ ब्रह्मणाम्पतये नमः
७६. ॐ ब्रह्मणस्पतये नमः
७७. ॐ ज्येष्ठराजाय नमः
७८. ॐ निधिपतये नमः
७९. ॐ निधिप्रियपतिप्रियाय नमः
८०. ॐ हिरण्मयपुरान्तस्थाय नमः
८१. ॐ सूर्यमण्डलमध्यगाय नमः
८२. ॐ कराहतिध्वस्तसिन्धु-सलिलाय नमः
८३. ॐ पूषदन्तभिदे नमः

८४. ॐ उमाङ्ककेलिकुतुकिने नमः
८५. ॐ मुक्तिदाय नमः
८६. ॐ कुलपालनाय नमः
८७. ॐ किरीटिने नमः
८८. ॐ कुण्डलिने नमः
८९. ॐ हारिणे नमः
९०. ॐ वनमालिने नमः
९१. ॐ मनोमयाय नमः
९२. ॐ वैमुख्यहतदैत्यश्रिये नमः
९३. ॐ पादाहतिजितक्षितये नमः
९४. ॐ सद्योजातस्वर्णमुञ्जमेखलिने नमः
९५. ॐ दुर्निमित्तहृते नमः
९६. ॐ दुःस्वप्नहृते नमः
९७. ॐ प्रसहनाय नमः
९८. ॐ गुणिने नमः
९९. ॐ नादप्रतिष्ठिताय नमः
१००. ॐ सुरूपाय नमः
१०१. ॐ सर्वनेत्राधिवासाय नमः
१०२. ॐ वीरासनाश्रयाय नमः
१०३. ॐ पीताम्बराय नमः
१०४. ॐ खण्डरदाय नमः
१०५. ॐ खण्डेन्दुकृतशेखराय नमः
१०६. ॐ चित्राङ्कश्यामदशनाय नमः
१०७. ॐ भालचन्द्राय नमः
१०८. ॐ चतुर्भुजाय नमः
१०९. ॐ योगाधिपाय नमः
११०. ॐ तारकस्थाय नमः
१११. ॐ पुरुषाय नमः
११२. ॐ गजकर्णकाय नमः
११३. ॐ गणाधिराजाय नमः
११४. ॐ विजयस्थिराय नमः
११५. ॐ गणपतिध्वजिने नमः
११६. ॐ देवदेवाय नमः
११७. ॐ स्मरप्राणदीपकाय नमः
११८. ॐ वायुकीलकाय नमः
११९. ॐ विपश्चिद्वरदाय नमः
१२०. ॐ नादोन्नादभिन्नबलाहकाय नमः
१२१. ॐ वराहरदनाय नमः
१२२. ॐ मृत्युञ्जयाय नमः
१२३. ॐ व्याघ्राजिनाम्बराय नमः
१२४. ॐ इच्छाशक्तिधराय नमः
१२५. ॐ देवत्रात्रे नमः
१२६. ॐ दैत्यविमर्दनाय नमः
१२७. ॐ शम्भुवक्त्रोद्भवाय नमः
१२८. ॐ शम्भुकोपघ्ने नमः
१२९. ॐ शम्भुहास्यभुवे नमः
१३०. ॐ शम्भुतेजसे नमः
१३१. ॐ शिवाशोकहारिणे नमः
१३२. ॐ गौरीसुखावहाय नमः
१३३. ॐ उमाङ्गमलजाय नमः
१३४. ॐ गौरीतेजोभुवे नमः
१३५. ॐ स्वर्धुनीभवाय नमः
१३६. ॐ यज्ञकायाय नमः
१३७. ॐ महानादाय नमः
१३८. ॐ गिरिवर्ष्मणे नमः
१३९. ॐ शुभाननाय नमः
१४०. ॐ सर्वात्मने नमः
१४१. ॐ सर्वदेवात्मने नमः
१४२. ॐ ब्रह्ममूर्ध्ने नमः
१४३. ॐ ककुप्श्रुतये नमः
१४४. ॐ ब्रह्माण्डकुम्भाय नमः
१४५. ॐ चिद्व्योमभालाय नमः
१४६. ॐ सत्यशिरोरुहाय नमः
१४७. ॐ जगज्जन्मलयोन्मेषनिमेषाय नमः
१४८. ॐ अग्न्यर्कसोमदृशे नमः
१४९. ॐ गिरिन्द्रैकरदाय नमः
१५०. ॐ धर्माधर्मोष्ठाय नमः
१५१. ॐ सामबृंहिताय नमः
१५२. ॐ ग्रहर्क्षदशनाय नमः
१५३. ॐ वाणीजिह्वाय नमः
१५४. ॐ वासवनासिकाय नमः
१५५. ॐ कुलाचलांसाय नमः
१५६. ॐ सोमार्कघण्टाय नमः
१५७. ॐ रुद्रशिरोधराय नमः
१५८. ॐ नदीनदभुजाय नमः
१५९. ॐ सर्पाङ्गुलीकाय नमः
१६०. ॐ तारकानखाय नमः
१६१. ॐ भ्रूमध्यसंस्थितकराय नमः
१६२. ॐ ब्रह्मविद्यामदोत्कटाय नमः
१६३. ॐ व्योमनाभये नमः
१६४. ॐ श्रीहृदयाय नमः
१६५. ॐ मेरुपृष्ठाय नमः
१६६. ॐ अर्णवोदराय नमः
१६७. ॐ कुक्षिस्थयक्षगन्धर्वरक्षःकिन्नरमानुषाय नमः

१६८. ॐ पृथ्वीकटये नमः
१६९. ॐ सृष्टिलिङ्गाय नमः
१७०. ॐ शैलोरवे नमः
१७१. ॐ दस्रजानुकाय नमः
१७२. ॐ पातालजङ्घाय नमः
१७३. ॐ मुनिपदे नमः
१७४. ॐ कालाङ्गुष्ठाय नमः
१७५. ॐ त्रयीतनवे नमः
१७६. ॐ ज्योतिर्मण्डललाङ्गूलाय नमः
१७७. ॐ हृदयालाननिश्चलाय नमः
१७८. ॐ हृत्पद्मकर्णिकाशालि-वियत्केलिसरोवराय नमः
१७९. ॐ सद्भक्तध्याननिगडाय नमः
१८०. ॐ पूजावारीनिवारिताय नमः
१८१. ॐ प्रतापिने नमः
१८२. ॐ कश्यपसुताय नमः
१८३. ॐ गणपाय नमः
१८४. ॐ विष्टपिने नमः
१८५. ॐ बलिने नमः
१८६. ॐ यशस्विने नमः
१८७. ॐ धार्मिकाय नमः
१८८. ॐ स्वोजसे नमः
१८९. ॐ प्रथमाय नमः
१९०. ॐ प्रथमेश्वराय नमः
१९१. ॐ चिन्तामणिद्वीपपतये नमः
१९२. ॐ कल्पद्रुमवनालयाय नमः
१९३. ॐ रत्नमण्डपमध्यस्थाय नमः
१९४. ॐ रत्नसिंहासनाश्रयाय नमः
१९५. ॐ तीव्राशिरोधृतपदाय नमः
१९६. ॐ ज्वालिनीमौलिलालिताय नमः
१९७. ॐ नन्दानन्दितपीठश्रिये नमः
१९८. ॐ भोगदाभूषितासनाय मः
१९९. ॐ सकामदायिनीपीठाय नमः
२००. ॐ स्फुरदुग्रासनाश्रयाय नमः
२०१. ॐ तेजोवतीशिरोरत्नाय नमः
२०२. ॐ सत्यानित्यावतंसिताय नमः
२०३. ॐ सविघ्ननाशिनीपीठाय नमः
२०४. ॐ सर्वशक्त्यम्बुजाश्रयाय नमः
२०५. ॐ लिपिपद्मासनाधाराय नमः
२०६. ॐ वह्निधामत्रयाश्रयाय नमः
२०७. ॐ उन्नतप्रपदाय नमः
२०८. ॐ गूढगुल्फाय नमः
२०९. ॐ संवृतपार्ष्णिकाय नमः
२१०. ॐ पीनजङ्घाय नमः
२११. ॐ श्लिष्टजानवे नमः
२१२. ॐ स्थूलोरवे नमः
२१३. ॐ प्रोन्नमत्कटये नमः
२१४. ॐ निम्ननाभये नमः
२१५. ॐ स्थूलकुक्षये नमः
२१६. ॐ पीनवक्षसे नमः
२१७. ॐ बृहद्भुजाय नमः
२१८. ॐ पीनस्कन्धाय नमः
२१९. ॐ कम्बुकण्ठाय नमः
२२०. ॐ लम्बोष्ठाय नमः
२२१. ॐ लम्बनासिकाय नमः
२२२. ॐ भग्नवामरदाय नमः
२२३. ॐ तुङ्गसव्यदन्ताय नमः
२२४. ॐ महाहनवे नमः
२२५. ॐ ह्रस्वनेत्रत्रयाय नमः
२२६. ॐ शूर्पकर्णाय नमः
२२७. ॐ निविडमस्ताकाय नमः
२२८. ॐ स्तकाकारकुम्भाग्राय नमः
२२९. ॐ रत्नमौलये नमः
२३०. ॐ निरङ्कुशाय नमः
२३१. ॐ सर्पहारकटिसूत्राय नमः
२३२. ॐ सर्पयज्ञोपवीतवते नमः
२३३. ॐ सर्पकोटीरकटकाय नमः
२३४. ॐ सर्पग्रैवेयकाङ्गदाय नमः
२३५. ॐ सर्पकक्ष्योदराबन्धाय नमः
२३६. ॐ सर्पराजोत्तरीयकाय नमः
२३७. ॐ रक्ताय नमः
२३८. ॐ रक्ताम्बरधराय नमः
२३९. ॐ रक्तमाल्यविभूषणाय नमः
२४०. ॐ रक्तेक्षणाय नमः
२४१. ॐ रक्तकराय नमः
२४२. ॐ रक्तताल्वोष्ठपल्लवाय नमः
२४३. ॐ श्वेताय नमः
२४४. ॐ श्वेताम्बरधराय नमः
२४५. ॐ श्वेतमाल्यविभूषणाय नमः
२४६. ॐ श्वेतातपत्ररुचिराय नमः
२४७. ॐ श्वेतचामरवीजिताय नमः
२४८. ॐ सर्वावयवसम्पूर्णसर्व-लक्षणलक्षिताय नमः
२४९. ॐ सर्वाभरणशोभाढ्याय नमः
२५०. ॐ सर्वशोभासमन्विताय नमः

२५१. ॐ सर्वमङ्गलमाङ्गल्याय नमः
२५२. ॐ सर्वकारणकारणाय नमः
२५३. ॐ सर्वदैककराय नमः
२५४. ॐ शार्ङ्गिणे नमः
२५५. ॐ बीजापूरिणे नमः
२५६. ॐ गदाधराय नमः
२५७. ॐ ईक्षुचापधराय नमः
२५८. ॐ शूलिने नमः
२५९. ॐ चक्रपाणये नमः
२६०. ॐ सरोजभृते नमः
२६१. ॐ पाशिने नमः
२६२. ॐ धृतोत्पलाय नमः
२६३. ॐ शालीमञ्जरीभृते नमः
२६४. ॐ स्वदन्तभृते नमः
२६५. ॐ कल्पवल्लीधराय नमः
२६६. ॐ विश्वाभयदैककराय नमः
२६७. ॐ वशिने नमः
२६८. ॐ अक्षमालाधराय नमः
२६९. ॐ ज्ञानमुद्रावते नमः
२७०. ॐ मुद्गरायुधाय नमः
२७१. ॐ पूर्णपात्रिणे नमः
२७२. ॐ कम्बुधराय नमः
२७३. ॐ विधृतालिसमुद्गकाय नमः
२७४. ॐ मातुलिङ्गधराय नमः
२७५. ॐ चूतकलिकाभृते नमः
२७६. ॐ कुठारवते नमः
२७७. ॐ पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकाय नमः
२७८. ॐ भारतीसुन्दरीनाथाय नमः
२७९. ॐ विनायकरतिप्रियाय नमः
२८०. ॐ महालक्ष्मीप्रियतमाय नमः
२८१. ॐ सिद्धलक्ष्मीमनोरमाय नमः
२८२. ॐ रमारमेशपूर्वाङ्गाय नमः
२८३. ॐ दक्षिणोमामहेश्वराय नमः
२८४. ॐ महीवराहवामाङ्गाय नमः
२८५. ॐ रतिकन्दर्पपश्चिमाय नमः
२८६. ॐ आमोदमोदजननाय नमः
२८७. ॐ सप्रमोदप्रमोदनाय नमः
२८८. ॐ समेधितसमृद्धिश्रिये नमः
२८९. ॐ ऋद्धिसिद्धिप्रवर्तकाय नमः
२९०. ॐ दत्तसौमुख्यसुमुखाय नमः
२९१. ॐ कान्तिकन्दलिताश्रयाय नमः
२९२. ॐ मदनावत्याश्रिताङ्घ्रये नमः
२९३. ॐ कृत्तदौर्मुख्यदुर्मुखाय नमः
२९४. ॐ विघ्नसम्पल्लवोपघ्नाय नमः
२९५. ॐ सेवोन्निद्रमदद्रवाय नमः
२९६. ॐ विघ्नकृन्निघ्नचरणाय नमः
२९७. ॐ द्राविणीशक्तिसत्कृताय नमः
२९८. ॐ तीव्राप्रसन्ननयनाय नमः
२९९. ॐ ज्वालिनीपालितैकदृशे नमः
३००. ॐ मोहिनीमोहनाय नमः
३०१. ॐ भोगदायिनीकान्तिमण्डिताय नमः
३०२. ॐ कामिनीकान्तवक्त्रश्रिये नमः
३०३. ॐ अधिष्ठितवसुन्धराय नमः
३०४. ॐ वसुन्धरामदोन्नद्धमहाशङ्खनिधिप्रभवे नमः
३०५. ॐ नमद्वसुमतीमौलिमहापद्मनिधिप्रभवे नमः
३०६. ॐ सर्वसद्गुरुसंसेव्याय नमः
३०७. ॐ शोचिष्केशहृदाश्रयाय नमः
३०८. ॐ ईशानमूर्ध्ने नमः
३०९. ॐ देवेन्द्रशिखाय नमः
३१०. ॐ पवननन्दनाय नमः
३११. ॐ अग्रप्रत्यग्रनयनाय नमः
३१२. ॐ दिव्यास्त्राणां प्रयोगविदे नमः
३१३. ॐ ऐरावतादिसर्वाशावारणावरणप्रियाय नमः
३१४. ॐ वज्राद्यस्त्रपरीवाराय नमः
३१५. ॐ गणचण्डसमाश्रयाय नमः
३१६. ॐ जयाजयपरीवाराय नमः
३१७. ॐ विजयाविजयावहाय नमः
३१८. ॐ अजितार्चितपादाब्जाय नमः
३१९. ॐ नित्यानित्यावतंसिताय नमः
३२०. ॐ विलासिनीकृतोल्लासाय नमः

३२१. ॐ शौण्डीसौन्दर्यमण्डिताय नमः
३२२. ॐ अनन्तानन्तसुखदाय नमः
३२३. ॐ सुमङ्गलसुमङ्गलाय नमः
३२४. ॐ इच्छाशक्तिज्ञानशक्ति-क्रियाशक्तिनिषेविताय नमः
३२५. ॐ सुभगासंश्रितपदाय नमः
३२६. ॐ ललितालालिताश्रयाय नमः
३२७. ॐ कामिनीकामनाय नमः
३२८. ॐ काममालिनीकेलिलालिताय नमः
३२९. ॐ सरस्वत्याश्रयाय नमः
३३०. ॐ गौरीनन्दनाय नमः
३३१. ॐ श्रीनिकेतनाय नमः
३३२. ॐ गुरुगुप्तपदाय नमः
३३३. ॐ वाचासिद्धाय नमः
३३४. ॐ वागीश्वरीपतये नमः
३३५. ॐ नलिनीकामुकाय नमः
३३६. ॐ वामारामाय नमः
३३७. ॐ ज्येष्ठामनोरमाय नमः
३३८. ॐ रौद्रीमुद्रितपादाब्जाय नमः
३३९. ॐ हुं बीजाय नमः
३४०. ॐ तुङ्गशक्तिकाय नमः
३४१. ॐ विश्वादिजननत्राणाय नमः
३४२. ॐ स्वाहाशक्तये नमः
३४३. ॐ सकीलकाय नमः
३४४. ॐ अमृताब्धिकृतावासाय नमः
३४५. ॐ मदघूर्णितलोचनाय नमः
३४६. ॐ उच्छिष्टगणाय नमः
३४७. ॐ उच्छिष्टगणेशाय नमः
३४८. ॐ गणनायकाय नमः
३४९. ॐ सार्वकालिकसंसिद्धये नमः
३५०. ॐ नित्यशैवाय नमः
३५१. ॐ दिगम्बराय नमः
३५२. ॐ अनपायाय नमः
३५३. ॐ अनन्तदृष्टये नमः
३५४. ॐ अप्रमेयाय नमः
३५५. ॐ अजरामराय नमः
३५६. ॐ अनाविलाय नमः
३५७. ॐ अप्रतिरथाय नमः
३५८. ॐ अच्युताय नमः
३५९. ॐ अमृताय नमः
३६०. ॐ अक्षराय नमः
३६१. ॐ अप्रतर्क्याय नमः
३६२. ॐ अक्षयाय नमः
३६३. ॐ अजय्याय नमः
३६४. ॐ अनाधाराय नमः
३६५. ॐ अनामयाय नमः
३६६. ॐ अमलाय नमः
३६७. ॐ अमोघसिद्धये नमः
३६८. ॐ अद्वैताय नमः
३६९. ॐ अघोराय नमः
३७०. ॐ अप्रमिताननाय नमः
३७१. ॐ अनाकाराय नमः
३७२. ॐ अब्धिभूम्यग्निबलघ्नाय नमः
३७३. ॐ अव्यक्तलक्षणाय नमः
३७४. ॐ आधारपीठाय नमः
३७५. ॐ आधाराय नमः
३७६. ॐ आधाराधेयवर्जिताय नमः
३७७. ॐ आखुकेतनाय नमः
३७८. ॐ आशापूरकाय नमः
३७९. ॐ आखुमहारथाय नमः
३८०. ॐ इक्षुसागरमध्यस्थाय नमः
३८१. ॐ इक्षुभक्षणलालसाय नमः
३८२. ॐ इक्षुचापातिरेकश्रिये नमः
३८३. ॐ इक्षुचापनिषेविताय नमः
३८४. ॐ इन्द्रगोपसमानश्रिये नमः
३८५. ॐ इन्द्रनीलसमद्युतये नमः
३८६. ॐ इन्दीवरदलश्यामाय नमः
३८७. ॐ इन्दुमण्डलनिर्मलाय नमः
३८८. ॐ इध्मप्रियाय नमः
३८९. ॐ इडाभागाय नमः
३९०. ॐ इडाधाम्ने नमः
३९१. ॐ इन्दिराप्रियाय नमः
३९२. ॐ इक्ष्वाकुविघ्नविध्वंसिने नमः
३९३. ॐ इतिकर्तव्यतेप्सिताय नमः
३९४. ॐ ईशानमौलये नमः
३९५. ॐ ईशानाय नमः
३९६. ॐ ईशानसुताय नमः
३९७. ॐ ईतिघ्ने नमः
३९८. ॐ ईषणात्रयकल्पान्ताय नमः
३९९. ॐ ईहामात्रविवर्जिताय नमः
४००. ॐ उपेन्द्राय नमः
४०१. ॐ उडुभृन्मौलये नमः
४०२. ॐ उण्डेरकबलिप्रियाय नमः
४०३. ॐ उन्नताननाय नमः

४०४. ॐ उत्तुङ्गाय नमः
४०५. ॐ उदारत्रिदशाग्रण्यै नमः
४०६. ॐ ऊर्जस्वते नमः
४०७. ॐ ऊष्मलमदाय नमः
४०८. ॐ ऊहापोहदुरासदाय नमः
४०९. ॐ ऋग्यजुःसामसम्भूतये नमः
४१०. ॐ ऋद्धिसिद्धिप्रदायकाय नमः
४११. ॐ ऋजुचित्तैकसुलभाय नमः
४१२. ॐ ऋणत्रयविमोचकाय नमः
४१३. ॐ स्वभक्तानां लुप्तविघ्नाय नमः
४१४. ॐ सुरद्विषां लुप्तशक्तये नमः
४१५. ॐ विमुखार्चानां लुप्तश्रिये नमः
४१६. ॐ लूताविस्फोटनाशनाय नमः
४१७. ॐ एकारपीठमध्यस्थाय नमः
४१८. ॐ एकपादकृतासनाय नमः
४१९. ॐ एजिताखिलदैत्यश्रिये नमः
४२०. ॐ एधिताखिलसंश्रयाय नमः
४२१. ॐ ऐश्वर्यनिधये नमः
४२२. ॐ ऐश्वर्याय नमः
४२३. ॐ ऐहिकामुष्मिकप्रदाय नमः
४२४. ॐ ऐरम्मदसमोन्मेषाय नमः
४२५. ॐ ऐरावतनिभाननाय नमः
४२६. ॐ ओङ्कारवाच्याय नमः
४२७. ॐ ओङ्काराय नमः
४२८. ॐ ओजस्वते नमः
४२९. ॐ औषधीपतये नमः
४३०. ॐ औदार्यनिधये नमः
४३१. ॐ औद्धत्यधुर्याय नमः
४३२. ॐ औन्नत्यनिस्वनाय नमः
४३३. ॐ सुरनागानामङ्कुशाय नमः
४३४. ॐ सुरविद्विषामङ्कुशाय नमः
४३५. ॐ अःसमस्तविसर्गान्तपदेषु परिकीर्तिताय नमः
४३६. ॐ कमण्डलुधराय नमः
४३७. ॐ कल्पाय नमः
४३८. ॐ कपर्दिने नमः
४३९. ॐ कलभाननाय नमः
४४०. ॐ कर्मसाक्षिणे नमः
४४१. ॐ कर्मकर्त्रे नमः
४४२. ॐ कर्माकर्मफलप्रदाय नमः
४४३. ॐ कदम्बगोलकाकाराय नमः
४४४. ॐ कूष्माण्डगणनायकाय नमः
४४५. ॐ कारुण्यदेहाय नमः
४४६. ॐ कपिलाय नमः
४४७. ॐ कथकाय नमः
४४८. ॐ कटिसूत्रभृते नमः
४४९. ॐ खर्वाय नमः
४५०. ॐ खड्गप्रियाय नमः
४५१. ॐ खड्गखान्तान्तस्थाय नमः
४५२. ॐ खनिर्मलाय नमः
४५३. ॐ खल्वाटशृङ्गनिलयाय नमः
४५४. ॐ खट्वाङ्गिने नमः
४५५. ॐ खुदरासदाय नमः
४५६. ॐ गुणाढ्याय नमः
४५७. ॐ गहनाय नमः
४५८. ॐ गस्थाय नमः
४५९. ॐ गद्यपद्यसुधार्णवाय नमः
४६०. ॐ गद्यगानप्रियाय नमः
४६१. ॐ गर्जाय नमः
४६२. ॐ गीतगीर्वाणपूर्वजाय नमः
४६३. ॐ गुह्याचाररताय नमः
४६४. ॐ गुह्याय नमः
४६५. ॐ गुह्यागमनिरूपिताय नमः
४६६. ॐ गुहाशयाय नमः
४६७. ॐ गुहाब्धिस्थाय नमः
४६८. ॐ गुरुगम्याय नमः
४६९. ॐ गुरोर्गुरवे नमः
४७०. ॐ घण्टाघर्घरिकामालिने नमः
४७१. ॐ घटकुम्भाय नमः
४७२. ॐ घटोदराय नमः
४७३. ॐ चण्डाय नमः
४७४. ॐ चण्डेश्वरसुहृदे नमः
४७५. ॐ चण्डीशाय नमः
४७६. ॐ चण्डविक्रमाय नमः
४७७. ॐ चराचरपतये नमः
४७८. ॐ चिन्तामणिचर्वणलालसाय नमः
४७९. ॐ छन्दसे नमः
४८०. ॐ छन्दोवपुषे नमः
४८१. ॐ छन्दोदुर्लक्ष्याय नमः
४८२. ॐ छन्दावग्रहाय नमः
४८३. ॐ जगद्योनये नमः

४८४. ॐ जगत्साक्षिणे नमः
४८५. ॐ जगदीशाय नमः
४८६. ॐ जगन्मयाय नमः
४८७. ॐ जपाय नमः
४८८. ॐ जपपराय नमः
४८९. ॐ जप्याय नमः
४९०. ॐ जिह्वासिंहासनप्रभवे नमः
४९१. ॐ झलल्झल्लोल्लसद्दान-झङ्कारिभ्रमराकुलाय नमः
४९२. ॐ टङ्कारस्फारसंरावाय नमः
४९३. ॐ टङ्कारिमणिनूपुराय नमः
४९४. ॐ ठद्वयीपल्लवान्तस्थ-सर्वमन्त्रैकसिद्धिदाय नमः
४९५. ॐ डिण्डिमुण्डाय नमः
४९६. ॐ डाकिनीशाय नमः
४९७. ॐ डामराय नमः
४९८. ॐ डिण्डिमप्रियाय नमः
४९९. ॐ ढक्कानिनादमुदिताय नमः
५००. ॐ ढौकाय नमः
५०१. ॐ ढुण्ढिविनायकाय नमः
५०२. ॐ तत्त्वानां परमतत्त्वाय नमः
५०३. तत्त्वंपदनिरूपिताय नमः
५०४. ॐ तारकान्तरसंस्थानाय नमः
५०५. ॐ तारकाय नमः
५०६. ॐ तारकान्तकाय नमः
५०७. ॐ स्थाणवे नमः
५०८. ॐ स्थाणुप्रियाय नमः
५०९. ॐ स्थात्रे नमः
५१०. ॐ स्थावराय जङ्गमाय जगते नमः
५११. ॐ दक्षयज्ञप्रमथनाय नमः
५१२. ॐ दात्रे नमः
५१३. ॐ दानवमोहनाय नमः
५१४. ॐ दयावते नमः
५१५. ॐ दिव्यविभवाय नमः
५१६. ॐ दण्डभृते नमः
५१७. ॐ दण्डनायकाय नमः
५१८. ॐ दन्तप्रभिन्नाभ्रमालाय नमः
५१९. ॐ दैत्यवारणदारणाय नमः
५२०. ॐ दंष्ट्रालग्नद्विपघटाय नमः
५२१. ॐ देवार्थनृगजाकृतये नमः
५२२. ॐ धनधान्यपतये नमः
५२३. ॐ धन्याय नमः
५२४. ॐ धनदाय नमः
५२५. ॐ धरणीधराय नमः
५२६. ॐ ध्यानैकप्रकटाय नमः
५२७. ॐ ध्येयाय नमः
५२८. ॐ ध्यानाय नमः
५२९. ॐ ध्यानपरायणाय नमः
५३०. ॐ नन्द्याय नमः
५३१. ॐ नन्दिप्रियाय नमः
५३२. ॐ नादाय नमः
५३३. ॐ नादमध्यप्रतिष्ठिताय नमः
५३४. ॐ निष्कलाय नमः
५३५. ॐ निर्मलाय नमः
५३६. ॐ नित्याय नमः
५३७. ॐ नित्याऽनित्याय नमः
५३८. ॐ निरामयाय नमः
५३९. ॐ परस्मै व्योम्ने नमः
५४०. ॐ परस्मै धाम्ने नमः
५४१. ॐ परमात्मने नमः
५४२. ॐ परस्मैपदाय नमः
५४३. ॐ परात्पराय नमः
५४४. ॐ पशुपतये नमः
५४५. ॐ पशुपाशविमोचकाय नमः
५४६. ॐ पूर्णानन्दाय नमः
५४७. ॐ परानन्दाय नमः
५४८. ॐ पुराणपुरुषोत्तमाय नमः
५४९. ॐ पद्मप्रसन्ननयनाय नमः
५५०. ॐ प्रणताज्ञानमोचनाय नमः
५५१. ॐ प्रमाणप्रत्ययातीताय नमः
५५२. ॐ प्रणतार्तिनिवारणाय नमः
५५३. ॐ फलहस्ताय नमः
५५४. ॐ फणिपतये नमः
५५५. ॐ फेत्काराय नमः
५५६. ॐ फाणितप्रियाय नमः
५५७. ॐ बाणार्चिताङ्घ्रियुगलाय नमः
५५८. ॐ बालकेलिकुतूहलिने नमः
५५९. ॐ ब्रह्मणे नमः
५६०. ॐ ब्रह्मार्चितपदाय नमः
५६१. ॐ ब्रह्मचारिणे नमः
५६२. ॐ बृहस्पतये नमः
५६३. ॐ बृहत्तमाय नमः
५६४. ॐ ब्रह्मपराय नमः
५६५. ॐ ब्रह्मण्याय नमः
५६६. ॐ ब्रह्मवित्प्रियाय नमः
५६७. ॐ बृहन्नादाग्र्यचीत्काराय नमः
५६८. ॐ ब्रह्माण्डावलिमेखलाय नमः

५६९. ॐ भूक्षेपदत्तलक्ष्मीकाय नमः
५७०. ॐ भर्गाय नमः
५७१. ॐ भद्राय नमः
५७२. ॐ भयापहाय नमः
५७३. ॐ भगवते नमः
५७४. ॐ भक्तिसुलभाय नमः
५७५. ॐ भूतिदाय नमः
५७६. ॐ भूतिभूषणाय नमः
५७७. ॐ भव्याय नमः
५७८. ॐ भूतालयाय नमः
५७९. ॐ भोगदात्रे नमः
५८०. ॐ भूमध्यगोचराय नमः
५८१. ॐ मन्त्राय नमः
५८२. ॐ मन्त्रपतये नमः
५८३. ॐ मन्त्रिणे नमः
५८४. ॐ मदमत्तमनोरमाय नमः
५८५. ॐ मेखलावते नमः
५८६. ॐ मन्दगतये नमः
५८७. ॐ मतिमत्कमलेक्षणाय नमः
५८८. ॐ महाबलाय नमः
५८९. ॐ महावीर्याय नमः
५९०. ॐ महाप्राणाय नमः
५९१. ॐ महामनसे नमः
५९२. ॐ यज्ञाय नमः
५९३. ॐ यज्ञपतये नमः
५९४. ॐ यज्ञगोप्त्रे नमः
५९५. ॐ यज्ञफलप्रदाय नमः
५९६. ॐ यशस्कराय नमः
५९७. ॐ योगगम्याय नमः
५९८. ॐ याज्ञिकाय नमः
५९९. ॐ याजकप्रियाय नमः
६००. ॐ रसाय नमः
६०१. ॐ रसप्रियाय नमः
६०२. ॐ रस्याय नमः
६०३. ॐ रञ्जकाय नमः
६०४. ॐ रावणार्चिताय नमः
६०५. ॐ रक्षोरक्षाकराय नमः
६०६. ॐ रत्नगर्भाय नमः
६०७. ॐ राज्यसुखप्रदाय नमः
६०८. ॐ लक्षाय नमः
६०९. ॐ लक्ष्यप्रदाय नमः
६१०. ॐ लक्ष्याय नमः
६११. ॐ लयस्थाय नमः
६१२. ॐ लड्डुकप्रियाय नमः
६१३. ॐ लानप्रियाय नमः
६१४. ॐ लास्यपराय नमः
६१५. ॐ लाभकृल्लोकविश्रुताय नमः
६१६. ॐ वरेण्याय नमः
६१७. ॐ वह्निवदनाय नमः
६१८. ॐ वन्द्याय नमः
६१९. ॐ वेदान्तगोचराय नमः
६२०. ॐ विकर्त्रे नमः
६२१. ॐ विश्वतश्चक्षुषे नमः
६२२. ॐ विधात्रे नमः
६२३. ॐ विश्वतोमुखाय नमः
६२४. ॐ वामदेवाय नमः
६२५. ॐ विश्वनेत्रे नमः
६२६. ॐ वज्रिवज्रनिवारणाय नमः
६२७. ॐ विश्वबन्धनविष्कम्भाधाराय नमः
६२८. ॐ विश्वेश्वरप्रभवे नमः
६२९. ॐ शब्दब्रह्मणे नमः
६३०. ॐ शम्प्राप्याय नमः
६३१. ॐ शम्भुशक्तिगणेश्वराय नमः
६३२. ॐ शास्त्रे नमः
६३३. ॐ शिखाग्रनिलयाय नमः
६३४. ॐ शरण्याय नमः
६३५. ॐ शिखरीश्वराय नमः
६३६. ॐ षड्ऋतुकुसुमस्रग्विणे नमः
६३७. ॐ षडाधाराय नमः
६३८. ॐ षडक्षराय नमः
६३९. ॐ संसारवैद्याय नमः
६४०. ॐ सर्वज्ञाय नमः
६४१. ॐ सर्वभेषजभेषजाय नमः
६४२. ॐ सृष्टिस्थितिलयक्रीडाय नमः
६४३. ॐ सुरकुञ्जरभेदनाय नमः
६४४. ॐ सिन्दूरितमहाकुम्भाय नमः
६४५. ॐ सदसद्व्यक्तिदायकाय नमः
६४६. ॐ साक्षिणे नमः
६४७. ॐ समुद्रमथनाय नमः
६४८. ॐ स्वसंवेद्याय नमः
६४९. ॐ स्वदक्षिणाय नमः
६५०. ॐ स्वतन्त्राय नमः
६५१. ॐ सत्यसङ्कल्पाय नमः
६५२. ॐ सामगानरताय नमः

६५३. ॐ सुखिने नमः
६५४. ॐ हंसाय नमः
६५५. ॐ हस्तिपिशाचीशाय नमः
६५६. ॐ हवनाय नमः
६५७. ॐ हव्यकव्यभुजे नमः
६५८. ॐ हव्याय नमः
६५९. ॐ हुतप्रियाय नमः
६६०. ॐ हर्षाय नमः
६६१. ॐ हल्लेखामन्त्रमध्यगाय नमः
६६२. ॐ क्षेत्राधिपाय नमः
६६३. ॐ क्षमाभर्त्रे नमः
६६४. ॐ क्षमापरपरायणाय नमः
६६५. ॐ क्षिप्रक्षेमकराय नमः
६६६. ॐ क्षेमानन्दाय नमः
६६७. ॐ क्षोणीसुरद्रुमाय नमः
६६८. ॐ धर्मप्रदाय नमः
६६९. ॐ अर्थदाय नमः
६७०. ॐ कामदात्रे नमः
६७१. ॐ सौभाग्यवर्धनाय नमः
६७२. ॐ विद्याप्रदाय नमः
६७३. ॐ विभवदाय नमः
६७४. ॐ भुक्तिमुक्तिफलप्रदाय नमः
६७५. ॐ अभिरूप्यकराय नमः
६७६. ॐ वीरश्रीप्रदाय नमः
६७७. ॐ विजयप्रदाय नमः
६७८. ॐ सर्ववश्यकराय नमः
६७९. ॐ गर्भदोषघ्ने नमः
६८०. ॐ पुत्रपौत्रदाय नमः
६८१. ॐ मेधादाय नमः
६८२. ॐ कीर्तिदाय नमः
६८३. ॐ शोकहारिणे नमः
६८४. ॐ दौर्भाग्यनाशनाय नमः
६८५. ॐ प्रतिवादिमुखस्तम्भाय नमः
६८६. ॐ रुष्टचित्तप्रसादनाय नमः
६८७. ॐ पराभिचारशमनाय नमः
६८८. ॐ दुःखभञ्जनकारकाय नमः
६८९. ॐ लवाय नमः
६९०. ॐ त्रुट्यै नमः
६९१. ॐ कलायै नमः
६९२. ॐ काष्ठायै नमः
६९३. ॐ निमेषाय नमः
६९४. ॐ तत्पराय नमः
६९५. ॐ क्षणाय नमः
६९६. ॐ घट्यै नमः
६९७. ॐ मुहूर्ताय नमः
६९८. ॐ प्रहराय नमः
६९९. ॐ दिवा नमः
७००. ॐ नक्तं नमः
७०१. ॐ अहर्निशं नमः
७०२. ॐ पक्षाय नमः
७०३. ॐ मासाय नमः
७०४. ॐ अयनाय नमः
७०५. ॐ वर्षाय नमः
७०६. ॐ युगाय नमः
७०७. ॐ कल्पाय नमः
७०८. ॐ महालयाय नमः
७०९. ॐ राशये नमः
७१०. ॐ तारायै नमः
७११. ॐ तिथये नमः
७१२. ॐ योगाय नमः
७१३. ॐ वाराय नमः
७१४. ॐ करणाय नमः
७१५. ॐ अंशकाय नमः
७१६. ॐ लग्नाय नमः
७१७. ॐ होरायै नमः
७१८. ॐ कालचक्राय नमः
७१९. ॐ मेरवे नमः
७२०. ॐ सप्तर्षिभ्यो नमः
७२१. ॐ ध्रुवाय नमः
७२२. ॐ राहवे नमः
७२३. ॐ मन्दाय नमः
७२४. ॐ कवये नमः
७२५. ॐ जीवाय नमः
७२६. ॐ बुधाय नमः
७२७. ॐ भौमाय नमः
७२८. ॐ शशिने नमः
७२९. ॐ रवये नमः
७३०. ॐ कालाय नमः
७३१. ॐ सृष्टये नमः
७३२. ॐ स्थितये नमः
७३३. ॐ यत्स्थावरं जङ्गमं विश्वं तस्मै तुभ्यं नमः
७३४. ॐ भुवे नमः
७३५. ॐ अद्भ्यो नमः
७३६. ॐ अग्नये नमः
७३७. ॐ मरुते नमः
७३८. ॐ व्योम्ने नमः

७३९. ॐ अहङ्कृतये नमः
७४०. ॐ प्रकृत्यै नमः
७४१. ॐ पुंसे नमः
७४२. ॐ ब्रह्मणे नमः
७४३. ॐ विष्णवे नमः
७४४. ॐ शिवाय नमः
७४५. ॐ रुद्राय नमः
७४६. ॐ ईशाय नमः
७४७. ॐ शक्त्यै नमः
७४८. ॐ सदाशिवाय नमः
७४९. ॐ त्रिदशेभ्यो नमः
७५०. ॐ पितृभ्यो नमः
७५१. ॐ सिद्धेभ्यो नमः
७५२. ॐ यक्षेभ्यो नमः
७५३. ॐ रक्षोभ्यो नमः
७५४. ॐ किन्नरेभ्यो नमः
७५५. ॐ साध्येभ्यो नमः
७५६. ॐ विद्याधरेभ्यो नमः
७५७. ॐ भूतेभ्यो नमः
७५८. ॐ मनुष्येभ्यो नमः
७५९. ॐ पशुभ्यो नमः
७६०. ॐ खगेभ्यो नमः
७६१. ॐ समुद्रेभ्यो नमः
७६२. ॐ सरिद्भ्यो नमः
७६३. ॐ शैलेभ्यो नमः
७६४. ॐ भूताय नमः
७६५. ॐ भव्याय नमः
७६६. ॐ भवोद्भवाय नमः
७६७. ॐ साङ्ख्याय नमः
७६८. ॐ पातञ्जलाय नमः
७६९. ॐ योगाय नमः
७७०. ॐ पुराणेभ्यो नमः
७७१. ॐ श्रुतये नमः
७७२. ॐ स्मृतये नमः
७७३. ॐ वेदाङ्गेभ्यो नमः
७७४. ॐ सदाचाराय नमः
७७५. ॐ मीमांसायै नमः
७७६. ॐ न्यायविस्तराय नमः
७७७. ॐ आयुर्वेदाय नमः
७७८. ॐ धनुर्वेदाय नमः
७७९. ॐ गान्धर्वाय नमः
७८०. ॐ काव्यनाटकाय नमः
७८१. ॐ वैखानसाय नमः
७८२. ॐ भागवताय नमः
७८३. ॐ सात्वताय नमः
७८४. ॐ पाञ्चरात्रकाय नमः
७८५. ॐ शैवाय नमः
७८६. ॐ पाशुपताय नमः
७८७. ॐ कालमुखाय नमः
७८८. ॐ भैरवशासनाय नमः
७८९. ॐ शाक्ताय नमः
७९०. ॐ वैनायकाय नमः
७९१. ॐ सौराय नमः
७९२. ॐ जैनाय नमः
७९३. ॐ आर्हतसंहितायै नमः
७९४. ॐ सते नमः
७९५. ॐ असते नमः
७९६. ॐ व्यक्ताय नमः
७९७. ॐ अव्यक्ताय नमः
७९८. ॐ सचेतनाय नमः
७९९. ॐ अचेताय नमः
८००. ॐ बन्धाय नमः
८०१. ॐ मोक्षाय नमः
८०२. ॐ सुखाय नमः
८०३. ॐ भोगाय नमः
८०४. ॐ अयोगाय नमः
८०५. ॐ सत्याय नमः
८०६. ॐ अणवे नमः
८०७. ॐ महते नमः
८०८. ॐ स्वस्ति नमः
८०९. ॐ हुं नमः
८१०. ॐ फण्णमः
८११. ॐ स्वधा नमः
८१२. ॐ स्वाहा नमः
८१३. ॐ श्रौषण्णमः
८१४. ॐ वौषण्णमः
८१५. ॐ वषण्णमः
८१६. ॐ नमो नमः
८१७. ॐ ज्ञानाय नमः
८१८. ॐ विज्ञानाय नमः
८१९. ॐ आनन्दाय नमः
८२०. ॐ बोधाय नमः
८२१. ॐ संविदे नमः
८२२. ॐ शमाय नमः
८२३. ॐ यमाय नमः
८२४. ॐ एकस्मै नमः
८२५. ॐ एकाक्षराधाराय नमः
८२६. ॐ एकाक्षरपरायणाय नमः
८२७. ॐ एकाग्रधिये नमः
८२८. ॐ एकवीराय नमः

८२९. ॐ एकानेकस्वरूपधृषे नमः
८३०. ॐ द्विरूपाय नमः
८३१. ॐ द्विभुजाय नमः
८३२. ॐ द्व्यक्षाय नमः
८३३. ॐ द्विरदाय नमः
८३४. ॐ द्विपरक्षकाय नमः
८३५. ॐ द्वैमातुराय नमः
८३६. ॐ द्विरदनाय नमः
८३७. ॐ द्वन्द्वातीताय नमः
८३८. ॐ द्वयातिगाय नमः
८३९. ॐ त्रिधाम्ने नमः
८४०. ॐ त्रिकराय नमः
८४१. ॐ त्रेतात्रिवर्गफलदायकाय नमः
८४२. ॐ त्रिगुणात्मने नमः
८४३. ॐ त्रिलोकदाय नमः
८४४. ॐ त्रिशक्तीशाय नमः
८४५. ॐ ॐ त्रिलोचनाय नमः
८४६. ॐ चतुर्बाहवे नमः
८४७. ॐ चतुर्दन्ताय नमः
८४८. ॐ चतुरात्मने नमः
८४९. ॐ चतुर्मुखाय नमः
८५०. ॐ चतुर्विधोपायमयाय नमः
८५१. ॐ चतुर्वर्णाश्रमाश्रयाय नमः
८५२. ॐ चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकाय नमः
८५३. ॐ चतुर्थीपूजनप्रीताय नमः
८५४. ॐ चतुर्थीतिथिसम्भवाय नमः
८५५. ॐ पञ्चाक्षरात्मने नमः
८५६. ॐ पञ्चात्मने नमः
८५७. ॐ पञ्चास्याय नमः
८५८. ॐ पञ्चकृत्यकृते नमः
८५९. ॐ पञ्चाधाराय नमः
८६०. ॐ पञ्चवर्णाय नमः
८६१. ॐ पञ्चाक्षरपरायणाय नमः
८६२. ॐ पञ्चतालाय नमः
८६३. ॐ पञ्चकराय नमः
८६४. ॐ पञ्चप्रणवभाविताय नमः
८६५. ॐ पञ्चब्रह्ममयस्फूर्तये नमः
८६६. ॐ पञ्चावरणवारिताय नमः
८६७. ॐ पञ्चभक्ष्यप्रियाय नमः
८६८. ॐ पञ्चबाणाय नमः
८६९. ॐ पञ्चशिवात्मकाय नमः
८७०. ॐ षट्कोणपीठाय नमः
८७१. ॐ षट्चक्रधाम्ने नमः
८७२. ॐ षड्ग्रन्थिभेदकाय नमः
८७३. ॐ षडध्वध्वान्तावध्वंसिने नमः
८७४. ॐ षडङ्गुलमहाह्रदाय नमः
८७५. ॐ षण्मुखाय नमः
८७६. ॐ षण्मुखभ्रात्रे नमः
८७७. ॐ षट्शक्तिपरिवारिताय नमः
८७८. ॐ षड्वैरिवर्गविध्वंसिने नमः
८७९. ॐ षडूर्मिभयभञ्जनाय नमः
८८०. ॐ षट्तर्कदूराय नमः
८८१. ॐ षट्कर्मनिरताय नमः
८८२. ॐ षड्रसाश्रयाय नमः
८८३. ॐ सप्तपातालचरणाय नमः
८८४. ॐ सप्तद्वीपोरुमण्डलाय नमः
८८५. ॐ सप्तस्वर्लोकमुकुटाय नमः
८८६. ॐ सप्तसप्तिवरप्रदाय नमः
८८७. ॐ सप्ताङ्गराज्यसुखदाय नमः
८८८. ॐ सप्तर्षिगणमण्डिताय नमः
८८९. ॐ सप्तच्छन्दोनिधये नमः
८९०. ॐ सप्तहोत्रे नमः
८९१. ॐ सप्तस्वराश्रयाय नमः
८९२. ॐ सप्ताब्धिकेलिकासाराय नमः
८९३. ॐ सप्तमातृनिषेविताय नमः
८९४. ॐ सप्तच्छन्दोमोदाय नमः
८९५. ॐ सप्तच्छन्दोमखप्रभवे नमः
८९६. ॐ अष्टमूर्तिध्येयमूर्तये नमः
८९७. ॐ अष्टप्रकृतिकारणाय नमः
८९८. ॐ अष्टाङ्गयोगफलभुवे नमः
८९९. ॐ अष्टपत्राम्बुजासनाय नमः
९००. ॐ अष्टशक्तिसमृद्धिश्रिये नमः
९०१. ॐ अष्टैश्वर्यप्रदायकाय नमः
९०२. ॐ अष्टपीठोपपीठश्रिये नमः
९०३. ॐ अष्टमातृसमावृताय नमः
९०४. ॐ अष्टभैरवसेव्याय नमः
९०५. ॐ अष्टवसुवन्द्याय नमः

१०६. ॐ अष्टमूर्तिभृते नमः
१०७. ॐ अष्टचक्रस्फुरन्मूर्तये नमः
१०८. ॐ अष्टद्रव्यहविःप्रियाय नमः
१०९. ॐ नवनागासनाध्यासिने नमः
११०. ॐ नवनिध्यनुशासित्रे नमः
१११. ॐ नवद्वारपुराधाराय नमः
११२. ॐ नवद्वारनिकेतनाय नमः
११३. ॐ नवनारायणस्तुत्याय नमः
११४. ॐ नवदुर्गानिषेविताय नमः
११५. ॐ नवनाथमहानाथाश्रयाय नमः
११६. ॐ नवनागविभूषणाय नमः
११७. ॐ नवरत्नविचित्राङ्गाय नमः
११८. ॐ नवशक्तिशिरोधृताय नमः
११९. ॐ दशात्मकाय नमः
१२०. ॐ दशभुजाय नमः
१२१. ॐ दशदिक्पतिवन्दिताय नमः
१२२. ॐ दशाध्यायाय नमः
१२३. ॐ दशप्राणाय नमः
१२४. ॐ दशेन्द्रियनियामकाय नमः
१२५. ॐ दशाक्षरमहामन्त्राय नमः
१२६. ॐ दशाशाव्यापिविग्रहाय नमः
१२७. ॐ एकादशादिभी रुद्रैः स्तुताय नमः
१२८. ॐ एकादशाक्षराय नमः
१२९. ॐ द्वादशोद्दण्डदोर्दण्डाय नमः
१३०. ॐ द्वादशान्तनिकेतनाय नमः
१३१. ॐ त्रयोदशभिदाभिन्न-विश्वेदेवाधिदैवताय नमः
१३२. ॐ चतुर्दशेन्द्रवरदाय नमः
१३३. ॐ चतुर्दशमनुप्रभवे नमः
१३४. ॐ चतुर्दशादिविद्याढ्याय नमः
१३५. ॐ चतुर्दशजगत्प्रभवे नमः
१३६. ॐ सामपञ्चदशाय नमः
१३७. ॐ पञ्चादशीशीतांशु-निर्मलाय नमः
१३८. ॐ षोडशाधारनिलयाय नमः
१३९. ॐ षोडशस्वरमातृकाय नमः
१४०. ॐ षोडशान्तपदवासाय नमः
१४१. ॐ षोडशेन्दुकलात्मकाय नमः
१४२. ॐ कलासप्तदश्यै नमः
१४३. ॐ सप्तदशाय नमः
१४४. ॐ सप्तदशाक्षराय नमः
१४५. ॐ अष्टादशद्वीपपतये नमः
१४६. ॐ अष्टादशपुराणकृते नमः
१४७. ॐ अष्टादशौषधीसृष्टये नमः
१४८. ॐ अष्टादशविधिस्मृताय नमः
१४९. ॐ अष्टादशलिपिव्यष्टि-समष्टिज्ञानकोविदाय नमः
१५०. ॐ एकविंशाय पुंसे नमः
१५१. ॐ एकविंशत्यङ्गुलि-पल्लवाय नमः
१५२. ॐ चतुर्विंशतितत्त्वात्मने नमः
१५३. ॐ पञ्चविंशाख्यपूरुषाय नमः
१५४. ॐ सप्तविंशतितारेशाय नमः
१५५. ॐ सप्तविंशतियोगकृते नमः
१५६. ॐ द्वात्रिंशद्भैरवाधीशाय नमः
१५७. ॐ चतुस्त्रिंशन्महाह्रदाय नमः
१५८. ॐ षट्त्रिंशत्तत्त्वसम्भूतये नमः
१५९. ॐ अष्टात्रिंशत्कलातनवे नमः
१६०. ॐ नमदेकोनपञ्चाशन्मरु-द्वर्गनिरर्गलाय नमः
१६१. ॐ पञ्चाशदक्षरश्रेण्यै नमः
१६२. ॐ पञ्चाशद्रुद्रविग्रहाय नमः
१६३. ॐ पञ्चाद्विष्णुशक्तीशाय नमः
१६४. ॐ पञ्चाशन्मातृकालयाय नमः
१६५. ॐ द्विपञ्चाशद्वपुःश्रेणये नमः
१६६. ॐ त्रिषष्ट्यक्षरसंश्रयाय नमः
१६७. ॐ चतुःषष्ट्यर्णनिर्णेत्रे नमः
१६८. ॐ चतुःषष्टिकलानिधये नमः
१६९. ॐ चतुःषष्टिमहासिद्धयो-गिनीवृन्दवन्दिताय नमः
१७०. ॐ अष्टषष्टिमहातीर्थक्षेत्र-भैरवभावनाय नमः
१७१. ॐ चतुर्नवतिमन्त्रात्मने नमः
१७२. ॐ षण्णत्यधिकप्रभवे नमः
१७३. ॐ शतानन्दाय नमः
१७४. ॐ शतधृतये नमः
१७५. ॐ शतपत्रायतेक्षणाय नमः
१७६. ॐ शतानीकाय नमः
१७७. ॐ शतमखाय नमः

९७८. ॐ शतधारावरायुधाय नमः
९७९. ॐ सहस्रपत्रनिलयाय नमः
९८०. ॐ सहस्रफणभूषणाय नमः
९८१. ॐ सहस्रशीर्ष्णे पुरुषाय नमः
९८२. ॐ सहस्राक्षाय नमः
९८३. ॐ सहस्रपदे नमः
९८४. ॐ सहस्रनामसंस्तुत्याय नमः
९८५. ॐ सहस्राक्षवलापहाय नमः
९८६. ॐ दशसाहस्रफणभृत्फणिराजकृतासनाय नमः
९८७. ॐ अष्टाशीतिसहस्राद्यामहर्षिस्तोत्रनियन्त्रिताय नमः
९८८. ॐ लक्षाधीशप्रियाधाराय नमः
९८९. ॐ लक्षाधारमनोमयाय नमः
९९०. ॐ चतुर्लक्षजपप्रीताय नमः
९९१. ॐ चतुर्लक्षप्रकाशिताय नमः
९९२. ॐ चतुरशीतिलक्षाणां जीवानां देहसंस्थिताय नमः
९९३. ॐ कोटिसूर्यप्रतीकाशाय नमः
९९४. ॐ कोटिचन्द्रांशुनिर्मलाय नमः
९९५. ॐ शिवाभवाध्युष्टकोटिविनायकधुरन्धराय नमः
९९६. ॐ सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतये नमः
९९७. ॐ त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकाय नमः
९९८. ॐ अनन्तनाम्ने नमः
९९९. ॐ अनन्तश्रिये नमः
१०००. ॐ अनन्तानन्तसौख्यदाय नमः

इति श्रीगणेशसहस्रनामस्तोत्रम्

# माहात्म्यपाठारम्भप्रार्थनापुष्पाञ्जलिः

सुवर्णवर्णसुन्दरं सितैकदन्तबन्धुरं गृहीतपाशकाङ्कुशं वरप्रदाभयप्रदम् ।
चतुर्भुजं त्रिलोचनं भुजङ्गमोपवीतिनं प्रफुल्लवारिजासनं भजामि सिन्धुराननम् ।।
किरीटहारकुण्डलं प्रदीप्तबाहुभूषणं प्रचण्डरत्नकङ्कणप्रशोभिताङ्घ्रियष्टिकम् ।
प्रभातसूर्यसुन्दराम्बरद्वयप्रधारिणं सरत्नहेमनूपुरप्रशोभिताङ्घ्रिपङ्कजम् ।।
सुवर्णदण्डमण्डितप्रचण्डचारुचामरं गृहप्रदेन्दुसुन्दरं युगक्षणप्रमोदितम् ।
कवीन्द्रचित्तरञ्जकं महाविपत्तिभञ्जकं षडक्षरस्वरूपिणं भजे गजेन्द्ररूपिणम् ।।
विरिञ्चिविष्णुवन्दितं विरूपलोचनस्तुतं गिरीशदर्शनेच्छया समर्पितं पराम्बया ।
निरन्तरं सुरासुरैः सपुत्रवामलोचनैर्महामखेष्टकर्मसु स्मृतं भजामि तुन्दिलम् ।।
मदौघलुब्धचञ्चलालिमञ्जुगुञ्जितारवं प्रबुद्धचित्तरञ्जकं प्रमोदकर्णचालकम् ।
अनन्यभक्तिमानवं प्रचण्डमुक्तिदायकं नमामि नित्यमादरेण वक्रतुण्डनायकम् ।।
दारिद्र्यविद्रावणमाशु कामदं स्तोत्रं पठेदेतदजस्रमादरात् ।
पुत्री कलत्रस्वजनेषु मैत्री पुमान् भवेदेकवरप्रसादात् ।।

ॐ

# श्रीगणेशपुराणमाहात्म्यम्

## प्रथमोऽध्यायः { १ अध्याय }

ॐ गणेशाय नमः

पाशाङ्कुशौ कल्पलतां विषाणं
दधत्स्वशुण्डाहितबीजपूरः ।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलि-
र्हारोज्ज्वलो हस्तिमुखोऽवतान्नः ।।

ऋषय ऊचुः

सूत सूत महाप्राज्ञ वेदशास्त्रविशारद ।
सर्वविद्यानिधे त्वत्तो वक्ताऽन्यो नोपलभ्यते ।।१।।

जन्मजन्मान्तरीयं नः स्थितं पुण्यं महत्तरम् ।
तेन सन्दर्शनं जातं सर्वज्ञस्य सतस्तव ।।२।।

वयं धन्यतमा लोके जीवितं नः सुजीवितम् ।
पितरो वेदशास्त्राणि तपांस्याश्रम एव च ।।३।।

अष्टादशपुराणानि विस्तराच्छ्रावितानि नः ।
अन्यान्यपि हि नः श्रोतुमिच्छा नो वद सत्तम ।।४।।

शौनकेये महासत्रे सक्ता द्वादशवार्षिके ।
त्वत्कथामृतपानान्नो नान्यद्विश्रामकारणम् ।।५।।

सूत उवाच

साधु पृष्टं महाभागा भवद्भिः पुण्यकर्मभिः ।
साधूनां समचित्तानां मतिर्लोकोपकारिणी ।।६।।

चार हातहरूमा पाश, अङ्कुश, कल्पलता, विषाण (सिङ) धारण गर्ने आफ्नो सूँढको टुप्पामा बिमिरो लिएर सुहाएका रातो वर्णका, तीन नयनद्वारा विभूषित, पूर्णचन्द्रमालाई शिरमा लिने, गजाकार मुखमण्डलद्वारा देदीप्यमान र भक्तहरूको आराधनाबाट छिटो प्रसन्न हुने क्षिप्रप्रसादन श्रीगणेशले हाम्रो रक्षा गरून् ।

**ऋषिहरूले प्रश्न गरे –** अत्यन्त समुन्नत प्रज्ञाद्वारा सुहाएका वेद र शास्त्रका विशेषज्ञ र सबै विद्याका निधि हे सूतज्यू! शास्त्र र विद्याका विषयमा हजुरभन्दा विशेषज्ञ अर्को वक्ता कुनै छैन ।।१।। हामीहरूको जन्म-जन्मान्तरको महान् पुण्य रहेछ । त्यस पुण्यका प्रतापबाट आज हामीले हजुरजस्ता विद्वान् र सर्वज्ञ सज्जनको उत्तम दर्शन गर्ने अवसर प्राप्त गर्‍यौं।।२।। आज संसारमा हामी धन्य छौं र हाम्रो जीवन उत्तम जीवनका रूपमा परिणत भएको छ । पितापुर्खाहरूको महत्त्व, वेद एवं शास्त्रको तत्त्व, तपका भेद एवं महत्त्व, आश्रम-व्यवस्थाको आविर्भाव, विकास र औचित्य एवं अठार महापुराणजस्ता विषयमा हजुरले विस्तारपूर्वक हामीलाई उपदेश प्रदान गर्नुभएको छ। हे महापुरुष! यसै गरी अरू विषयमा पनि हाम्रो जिज्ञासा रहेको छ । ती विषयमा प्रवचन दिएर हाम्रो कल्याण गर्नुहुन हामी तपाईंसँग अनुरोध गर्दछौं ।।३-४।। शौनक ऋषिको बाह्र वर्षसम्म चल्ने महायागमा हामी दीक्षित भएका छौं । हजुरको कथामृतपानभन्दा अर्को विश्रामको उपाय छैन ।।५।।

**सूतजीले भन्नुभयो –** उत्तम भाग्य भएका हे ऋषिहरू! पुण्यकर्ममा प्रवृत्त हुनुभएका तपाईंहरूले उत्तम जिज्ञासा व्यक्त गर्नुभएको छ । सर्वत्र समान दृष्टि भएका सज्जनहरूको बुद्धि

ममापि परितोषोऽस्ति कथानां कथने द्विजाः ।
अतोऽहं साधुवृत्तेभ्यः कथयिष्ये विशेषतः ।।७।।

अन्यान्युपपुराणानि वर्तन्तेऽष्टादशैव च ।
गणेशं नारदीयं च नृसिंहादीन्यथापि च ।।८।।
गणेशस्य पुराणं यत्तत्रादौ कथयाम्यहम् ।
दुर्लभं श्रवणं यस्य मर्त्यलोके विशेषतः ।।९।।

यस्य स्मरणमात्रेण कृतकृत्यो भवेन्नरः ।
प्रभावमस्य गदितुं नेशः शेषश्चतुर्मुखः ।।१०।।

सङ्क्षेपतो ब्रवीम्येतत् तथापि भवदाज्ञया ।
बहुजन्मार्जितैः पुण्यैरस्य तु श्रवणं भवेत् ।।११।।

पाखण्डिनां नास्तिकानां न भवेत् पापकर्मिणाम् ।।
नित्यत्वान्निर्गुणत्वाच्च अनादित्वाच्च तत्त्वतः ।।१२।।

गणेशस्य स्वरूपं न वक्तुं केनापि शक्यते ।
तथाप्युपासनासक्तैर्निर्गुणं तन्निरूप्यते ।।१३।।

ॐकाररूपी भगवान् यो वेदादौ प्रतिष्ठितः ।
यं सदा मुनयो देवाः स्मरन्तीन्द्रादयो हृदि ।।१४।।

यं पूजयन्ति सततं ब्रह्मेशानेन्द्रविष्णवः ।।
यो हेतुः सर्वजगतां सर्वकारणकारणम् ।।१५।।

यदाज्ञया कः सृजतेऽथ विष्णु-
यदाज्ञया पालनमातनोति ।।
यदाज्ञया संहरते हरोऽपि
यदाज्ञया सञ्चरते दिनेशः ।।१६।।

लोकोपकारमा निरन्तर प्रवृत्त हुने गर्दछ । हे ब्राह्मण-देवताहरू! मलाई पनि उत्तम कथाहरूको वक्ता भएर आदर्शको उपस्थापन गर्न पाउँदा ज्यादै सन्तोष लागेको छ । उत्तम चरित्रले सुहाएका तपाईंहरूजस्ता विद्वान् श्रोताहरूका सामु मैले विशेषरूपमा शास्त्र र विद्यामा आधारित कथाहरूको प्रकाशन गर्नेछु। अठार महापुराणहरूभन्दा भिन्दै श्रीगणेशपुराण, नारदीयपुराण, नृसिंह पुराणजस्ता पुराणसमेत गरी अठार उपपुराण पनि रहेका छन्।।६-८।।

म सर्वप्रथम ती उपपुराणहरूमध्ये श्रीगणेशपुराणको विषयवस्तु तपाईंहरूसमक्ष प्रकाशित गर्नेछु। मर्त्यलोकमा श्रीगणेशपुराणको श्रवण अत्यन्त दुर्लभ मानिएको छ ।।९।। भगवान् श्रीगणेशको नाम-स्मरणबाट मात्र मानिस कृतकृत्य हुन्छ । श्रीगणेशको संप्रभुताबारे सम्पूर्णतया बताउन शेषनाग र ब्रह्मा पनि समर्थ हुँदैनन् ।।१०।। यसो हो तापनि तपाईंहरूको आज्ञालाई शिरमा राखेर आफ्नो ज्ञानअनुसार म सङ्क्षेपमा श्रीगणेशपुराणको महत्त्व वर्णन गर्दछु । अनेक जन्ममा अर्जित पुण्यबाट मात्र श्रीगणेशपुराण सुन्न पाइन्छ।।११।। पाखण्डी, नास्तिक र पापीहरू अनेक प्रयास गर्दा पनि श्रीगणेशपुराण सुन्ने सौभाग्यबाट वञ्चित हुन्छन् । श्रीगणेश नित्य, निर्गुण र अनादिस्वरूप हुनुहुन्छ ।।१२।। त्यस कारण श्रीगणेशको वास्तविक स्वरूप कसैले पनि बताएर सक्दैन। तथापि उपासनामा निरन्तर लाग्ने मानिसहरूले उहाँको स्वरूपलाई जान्न इच्छा गर्दछन्। ती सबैको जिज्ञासा मेटाउन म सर्वप्रथम श्रीगणेशको निर्गुण स्वरूपको विषयमा प्रवचन गर्दछु ।।१३।। वास्तवमा श्रीगणेश ॐकाररूप भगवान् हुनुहुन्छ। उहाँ वेद आदि शास्त्रहरूमा ॐकारकै रूपमा विराजमान हुनुहुन्छ । श्रीगणेशलाई मुनिगण र इन्द्र आदि देवताहरूले हृदयमा स्मरण गर्दछन् ।।१४।। ब्रह्मा, शिव, विष्णु र इन्द्रले निरन्तर जुन श्रीगणेशको आराधना गर्दछन्, जुन श्रीगणेश सम्पूर्ण संसारका कारण हुनुहुन्छ र सबै कारणका पनि कारणतत्त्व हुनुहुन्छ ।।१५।। जसको आज्ञा प्राप्त गरेर ब्रह्माले जगत्को सृष्टि गर्नुहुन्छ, विष्णुले जगत्को पालन गर्नुहुन्छ र शिवजीले जगत्को संहार गर्नुहुन्छ। जुन श्रीगणेशको आज्ञाका वशवर्ती भएर सूर्यनारायण निरन्तर आकाशमण्डलमा भ्रमण गर्नुहुन्छ ।।१६।। जसको आज्ञा पाएर पवनदेव सर्वत्र विचरण

यदाज्ञया वाति समीरणोऽपि
यदाज्ञयापः प्रवहन्ति दिक्षु ।
यदाज्ञया भानि पतन्ति भूमौ
यदाज्ञयाग्निर्ज्वलति त्रिलोके ।।१७।।

तस्य यच्चरितं गुप्तं कस्यापि न निवेदितम् ।
तदहं वः प्रवक्ष्यामि सादरं श्रूयतां द्विजाः ।।१८।।

ब्रह्मणा कथितं पूर्वं व्यासायामिततेजसे ।
भृगवे कथितं तेन सोमकान्ताय तेन च ।।१९।।

व्रतैर्यज्ञैस्तपोभिश्च दानैस्तीर्थैश्च कोटयः ।
भवन्ति येषां पुण्यानां तेषां बुद्धिः प्रजायते ।।२०।।

गणेशाख्यपुराणस्य श्रवणे द्विजसत्तमाः ।
माया येषां न संसारे न दारापत्यभूमिषु ।।२१।।

मयूरेशकथायां ते सादरा मुनिसत्तमाः ।
श्रूयतामस्य महिमा सोमकान्तप्रसङ्गतः ।।२२।।

सौराष्ट्रे देवनगरे सोमकान्तोऽभवन्नृपः ।
वेदशास्त्रार्थतत्त्वज्ञो धर्मशास्त्रार्थतत्परः ।।२३।।

बुद्ध्या बृहस्पतिं जिग्ये सम्पदा धनदञ्च यः ।
क्षमया पृथिवीं जिग्ये गाम्भीर्येण महोदधिम् ।।२४।।

सूर्याचन्द्रमसौ जिग्ये भासा कान्त्या च यो नृपः ।
प्रतापेनाऽनलं जिग्ये सौन्दर्येण मनोभवम् ।।२५।।

यस्यामात्याः प्रबलिनः पञ्चासन् दृढविक्रमाः ।
नीतिशास्त्रार्थतत्त्वज्ञाः परराष्ट्रविमर्दिनः ।।२६।।

रूपवान् प्रथमस्तत्र विद्याधीशस्तथापरः ।
क्षेमङ्करो ज्ञानगम्यः सुबलः पञ्चमः स्मृतः ।।२७।।

गर्नुहुन्छ। जसको आज्ञाअनुसार जलतत्त्व सम्पूर्ण विश्वमा फैलिएर रहन्छ । जुन श्रीगणेशको आज्ञाबाट ग्रह-नक्षत्रहरूले आफ्ना किरण संसारमा फैलाउँछन्। जुन श्रीगणेशको आज्ञाबाट अग्निदेवता स्वर्ग, मर्त्य एवं पातालमा जाज्वल्यमान बन्दछन् ।।१७।। त्यस्ता ती परमेश्वर श्रीगणेशको चरित्र गुप्त र गहन छ। त्यसलाई आजसम्म कसैका सामु प्रकाशित गरिएको छैन । म आज त्यसलाई तपाईँहरू-सामु आदरपूर्वक प्रकाशित गर्दैछु । हे ब्राह्मणदेवहरू ! श्रीगणेशको त्यो पावन चरित्र तपाईँहरूले श्रद्धापूर्वक सुन्नुहोस् ।।१८।। सर्वप्रथम ब्रह्माले अत्यन्त तेजस्वी शिष्य वेदव्यासलाई श्रीगणेशको चरित्र बताउनुभएको थियो । वेदव्यासले भृगुऋषिलाई बताउनुभयो र भृगुऋषिले पनि त्यो पावनचरित्र आफ्ना शिष्य सोमकान्तलाई उपदेश गर्नुभएको थियो ।।१९।।

व्रत, यज्ञ, तप, दान र तीर्थाटनद्वारा जसले कोटि-कोटि पुण्य अर्जित गरेका छन्, ती भाग्यशाली साधकहरूको बुद्धिमा मात्र श्रीगणेशको चरित्र र श्रीगणेशपुराणको श्रवण गर्ने जिज्ञासा पैदा हुन्छ।।२०।। हे उत्तम ब्राह्मणहरू ! जसको संसारको ऐश्वर्य, पत्नी, पुत्र र भूसम्पत्तिमा आसक्ति हुँदैन, ती पुण्यवान् मानिसहरूमात्र मयूरेशका नामबाट प्रसिद्ध हुनुभएका श्रीगणेशको कथामृत पान गर्न आदरपूर्वक लालायित हुन्छन् । हे मुनिजन! सोमकान्तनामक प्राचीन राजाको कथाको प्रसङ्गबाट म तपाईँहरूलाई मयूरेश प्रभुको महिमा बताउँछु सुन्नुहोस् ।।२१-२२।। कुनै समयमा सौराष्ट्र प्रान्तको देवनगरमा सोमकान्त नामक राजा थिए। ती वेद र शास्त्रका तत्त्वज्ञाता थिए र धर्मशास्त्रको अर्थबोध एवं प्रयोगमा नित्य तत्पर थिए ।।२३।।

राजा सोमकान्तले आफ्नो बुद्धिद्वारा बृहस्पति, सम्पत्तिद्वारा कुबेर, सहनशीलताद्वारा पृथिवी, गाम्भीर्यद्वारा महासागर, आभा र कान्तिद्वारा सूर्य एवं चन्द्रमा, प्रतापद्वारा अग्नि र सौन्दर्यद्वारा कामदेवलाई परास्त गरेका थिए ।।२४-२५।। राजा सोमकान्तका बलवान्, दृढचरित्र, पुरुषार्थी, नीतिशास्त्रका विशेषज्ञ, शत्रुराष्ट्रलाई शौर्य र वीर्यले छिन्न-भिन्न तुल्याउन समर्थ र गुणवान्का रूपमा संसारमा प्रख्यात पाँच महामात्यहरू थिए ।।२६।। ती पाँच महामात्यहरूमध्ये प्रथम महामात्य रूपवान्, दोस्रा महामात्य विद्याधीश, तेस्रा महामात्य क्षेमङ्कर, चौथा महामात्य ज्ञानगम्य र पाँचौं महामात्य सुबलनामबाट प्रसिद्ध थिए ।।२७।। राजा

तस्य राज्ञोऽभवद् भार्या सुधर्मा गुणशालिनी ।
भगवद्भजने सक्ता तथा चातिथिपूजने ।।२८।।

सेवनेऽहर्निशं भर्तुर्वचने च रता सदा ।
हेमकण्ठ इति ख्यात: पुत्रोऽभूदनयो: शुभ: ।।२९।।

सर्वान् राज्ञो वशे कृत्वा चक्रे राज्यं धरातले ।
नित्यं धर्मरतो यज्वा दाता त्यागी द्विजोत्तमा: ।।३०।।

ऋषय ऊचु:
श्रीगणेशपुराणस्य महिमा यादृशो मुने ! ।
कथ्यतां कृपया शीघ्रं सोमकान्तप्रसङ्गत: ।।३१।।

सूत उवाच
श्रूयतामृषय: सर्वे सोमकान्तस्य दुष्कृतम् ।
अकस्मादभवत् तस्य गलत्कुष्ठोऽतिदु:खद: ।।३२।।

धर्मशीलस्य राज्ञोऽथ पूर्वकर्मविपाकत: ।
शुभं वाप्यशुभं कर्म न मुञ्चति नरं क्वचित् ।।३३।।

यस्यां यस्यामवस्थायां कृतं भवति कर्म यत् ।
तस्यां तस्यामवस्थायां भुज्यते प्राणिभिर्ध्रुवम् ।।३४।।

दु:खसागरमग्नोऽभूदप्लवो जलधौ यथा ।
वेदनामलभद् बह्वीं भुजङ्गेनेव दंशित: ।।३५।।

नानाक्षतसमाकीर्ण: स्रवद्रक्त इतस्तत: ।
पूयशोणितवान् राजा कृमिभिर्विह्वलीकृत: ।
अस्थिशेषोऽभवद्राजा यक्ष्मणेव समावृत: ।।३६।।

चिन्तया व्याकुलीभूत: सर्वेन्द्रियरुजान्वित: ।
ततोऽमात्याञ्जगौ राजा मन: संरुद्ध्य यत्नत: ।।३७।।

राजोवाच
धिङ् मे राज्यञ्च रूपञ्च धिग्बलं जीवितं धनम् ।
केनेदं कर्मबीजेन व्यसनं समुपस्थितम् ।।३८।।

सोमकान्तकी अत्यन्त गुणवती र रूपवती सुधर्मा नामक रानी थिइन् । ती निरन्तर भगवान्को भजनमा लागिरहन्थिन् । तिनी सधैं अतिथि-अभ्यागतको स्वागत - सेवा गर्दथिन् ।।२८।। ती पतिसेवा र पतिको आज्ञापालनमा निरन्तर जागरूक थिइन्। सोमकान्त राजा र सुधर्मा रानीका सुपुत्र हेमकण्ठ नामबाट संसारमा विख्यात भए ।।२९।। हे मुनिहरू! सोमकान्तले सबै राजाहरूलाई वशवर्ती तुल्याएर पृथिवीमा राज्य गरे । ती राजा नित्य धर्माचरणमा तत्पर, यज्ञशील, दानी र त्यागीका रूपमा संसारमा प्रसिद्ध भए ।।३०।।

**ऋषिहरूले भने -** हे आचार्य ! श्रीगणेशपुराणको जुन किसिमको महिमा छ, त्यस विषयमा राजा सोमकान्तको जीवनीको प्रसङ्गबाट हामीलाई बताउनुहोस् ।।३१।।

**सूतजीले भन्नुभयो -** हे ऋषिहरू ! राजा सोमकान्तको पाप र त्यसको परिणामको विषयमा म भन्दछु तपाईंहरू सुन्नुहोस्। एक दिन एक्कासि तिनको शरीरमा जुन रोग लाग्दा मानिसका नङ, औंला अथवा नाक गलेर झर्ने गर्दछन् त्यस्तो अत्यन्त दु:खदायक, पीपै पीपले भरिएको कुष्ठरोग देखियो ।।३२।। पूर्वजन्ममा गरेका पापको परिणामबाट धर्मात्मा ती राजाले त्यो रोग ब्यहोर्नु पर्‍यो । वास्तवमा शुभ अथवा अशुभ कर्मले कहीं पनि मानिसलाई छाड्दैन ।।३३।। जुन जुन अवस्थामा मानिसद्वारा जस्तो कर्म गरिन्छ ती ती अवस्थामा त्यसको फल तिनले अवश्य भोग्नुपर्दछ ।।३४।। यसरी गलत्कुष्ठ रोगले ग्रस्त राजा सोमकान्त गहन समुद्रको माझमा डुँगा डुबेझैं दु:खका सागरमा डुबे । ती राजाले सर्पले डसेको प्राणीले झैं धेरै वेदना भोग्नुपर्‍यो ।।३५।। अनेक घाउका खोपिल्टाले जेलिएका, शरीरबाट चारैतर्फ रगत चुहाइरहेका र पीपै पीप एवं रगतै रगतले मुछिएका ती राजालाई घाउका कीराले अत्यन्त व्याकुल बनाए । क्षयरोगले जीर्ण-शीर्ण मानिसझैं तिनको शरीरमा हाडमात्र देखिन्थ्यो ।।३६।। सम्पूर्ण इन्द्रियमा रोग लागेका र चिन्ताले व्याकुल राजा सोमकान्तले ठूलो प्रयासबाट मनलाई बाँधेर आफ्ना महामात्यहरूसँग कुराकानी गरे ।।३७।।

**राजाले भने -** मेरो राज्यलाई धिक्कार छ, मेरो रूपलाई धिक्कार छ, मेरो सामर्थ्यलाई धिक्कार छ, मेरो जीवनलाई

कान्त्या सोमो जितो येन सोमकान्तस्ततोऽभवम् ।
येन मे साधवो दीनाः श्रोत्रिया आश्रमा अपि ।।३९।।

पालिताः पुत्रवज्जानपदा लोकास्तथा परे ।
येन मे निर्जिता बाणैः शत्रवो घोररूपिणः ।।४०।।

येन मे सकला पृथ्वी कृता स्ववशवर्तिनी ।
सम्यगाराधितो देवः परमात्मा सदाशिवः ।।४१।।

दुष्टसङ्गमहीनेन चित्तनिग्रहकारिणा ।
येन मे वपुषा पूर्वमिष्टगन्धा निषेविताः ।।४२।।

तदिदानीं पूतिगन्धमतो मे जीवितं वृथा ।
अतोऽहङ्काननं यास्ये सर्वेषामभ्यनुज्ञया ।।४३।।

हेमकण्ठं सुतं सर्वे बुद्धिविक्रमसंयुतम् ।
सिञ्चन्तु राज्यहेतोर्मे पालयन्तु पराक्रमैः ।।४४।।

इदानीं न प्रदर्शिष्ये मुखं लोके कथञ्चन ।
न मे राज्यैर्नदारैर्वा जीवितेन श्रियाऽपि वा ।।४५।।

प्रयोजनं महामात्याः करिष्ये स्वहितं वने ।

सूत उवाच

इत्युक्त्वा निपपातोर्व्यान्तरुर्वातहतो यथा ।।४६।।

पूयशोणितघर्मौघैर्व्याप्तोऽसौ द्विजसत्तमाः ।
कोलाहलो महानासीदमात्यानाञ्च योषिताम् ।।४७।।

हाहाकारश्च लोकानां क्षणमासीत् सुदारुणः ।
वस्त्रप्रोञ्छनवाताद्यैरौषधैः क्षिप्रकारिभिः ।।४८।।

मणिमन्त्रप्रयोगैस्तं सचेतनमकारयन् ।
स्वस्थे जाते नृपे तस्मिन्नमात्याः प्राब्रुवन्निदम् ।।४९।।

धिक्कार छ र मेरो धनसम्पत्तिलाई पनि धिक्कार छ । कुन कर्मबीजका कारण मेरा सामु यो विपत्ति आइलाग्यो ? मलाई थाहा छैन ।।३८।। आफ्नो कान्तिद्वारा सोम अर्थात् चन्द्रमालाई जितेका कारण म सोमकान्त नामबाट चिनिन्छु । मैले सज्जन, दीन-दुःखी, श्रोत्रिय विद्वान्, ब्रह्मचर्य-गृहस्थ आदि आश्रम, देशका नागरिक र अरू मानिसको पनि संरक्षण एवं परिपालन गरें । मैले आफ्ना बाणद्वारा भयङ्कर शत्रुहरूलाई सङ्ग्राममा परास्त गरें । मैले आफ्नो पुरुषार्थबाट सम्पूर्ण पृथिवीलाई आफ्नो अधिकारमा ल्याएँ । दुष्टहरूको सङ्गति नगर्ने र चित्तको निग्रह गर्ने स्वभाव अँगालेर मैले परमात्मा सदाशिवको राम्ररी आराधना गरें । मैले आफ्नो जीवनका बितेका दिनहरूमा शरीरद्वारा अत्यन्त अभीष्ट, मीठा र सुगन्धित पदार्थहरूको सेवन गरें, उपभोग गरें । परन्तु मलाई थाहा छैन कुन कारणले आज कुष्ठरोगको दुर्गन्ध भोग्नु-परिरहेको छ ? तसर्थ मेरो जीवन व्यर्थ छ । अब म छिट्टै सबैसँग बिदावादी भई वनतर्फ लाग्दछु ।।३९-४३।। म वनतर्फ गएपछि सबै भाइभारदार र जनता मिलेर बुद्धि र पराक्रम दुवै गुणले सम्पन्न मेरा छोरा हेमकण्ठको राज्याभिषेक गरून् र आफ्नो पराक्रमद्वारा तिनको रक्षा पनि गरून् ।।४४।। अहिले म कुनै रूपमा पनि सबैका सामु आफ्नो मुख देखाउन सक्दिनँ । मेरा लागि अब राज्य, रानीहरू, राज्यलक्ष्मी र जीवनको पनि कुनै प्रयोजन रहेन। हे महामात्यहरू! अब म वन गई आफ्नो हितका लागि परमार्थसाधना गर्न चाहन्छु ।

**सूतजीले भन्नुभयो -** यस्ता कुरा भनेर राजा सोमकान्त हावाले ढलेको रूखझैं भुइँमा ढले ।।४५-४६।। हे विज्ञ मुनिजन! त्यसपछि पीप, रगत र पसिनाका धाराले चुर्लुम्म भिजेका राजा सोमकान्तको मूर्च्छित देखेर अमात्य र त्यहाँ रहेका नर-नारीहरूले ठूलो कोलाहल गरे।।४७।। त्यस बेला धेरै दुःखको अनुभव गरिरहेका जनता दारुण चीत्कार गरिरहेका थिए । राजाका सेवकहरूले कपडाका टुक्राले रगत, पीप र पसिना पुछ्ने तथा ताजा हावाको सेवन गराउनेजस्ता कामका साथै छिटो प्रभाव पार्ने औषधिको र मन्त्रवेत्ताका मन्त्रहरूको प्रयोग गराएर राजालाई होशमा ल्याए । राजा सोमकान्त केही स्वस्थ देखिएपछि तिनलाई लक्षित गर्दै अमात्यहरूले आ-आफ्ना भाव यसरी प्रकट गरे ।।४८-४९।।

अमात्या ऊचु:

तव प्रसादादमरेन्द्रतुल्यं
भुक्तं सुखं सर्वजनेष्वसिद्धम् ।
कथं त्विदानीं त्वदृते वसाम:
कथञ्च जीवेम पशुघ्नतुल्या: ।।५०।।

करोतु राज्यं तवसूनुरेक:
प्रभूतकोशो बलवान् रिपुघ्न: ।
विहाय सर्वं सुखमद्य राजन् !
सहैव यामस्तु वनाय गन्तुम् ।।५१।।

सूत उवाच

तत: सुधर्मा वचनं जगाद
वने नृपं सेवितुमेकवीरा ।
व्रजे सहानेन प्रधानवर्या
प्रशिष्ट राज्यं सह मे सुतेन ।।५२।।

दु:खस्य भोक्ता न परोऽस्ति नैव
सुखस्य वा पूर्वकृतस्य जन्तो: ।
यथा यथा कर्मफलं प्रसक्तं
तदेव भोग्यं स्वयमेव तादृक् ।।५३।।

मयापि नानाविधभोगवत्या
सुखेन राज्यं परिभुक्तमस्य ।
स्त्रीणां हि भर्त्रा गमनं सहैव
परत्र लोके मुनिभि: प्रदिष्टम् ।।५४।।

तत: पुत्रो हेमकण्ठो विनीत: शोकसङ्कुल: ।
उवाच तस्मिन् समये सोमकान्तमिदं वच: ।।५५।।

हेमकण्ठ उवाच

न मे राज्येन दारैश्च प्राणैर्धनचयैरपि ।
त्वां विना नृपशार्दूल! कृत्यं नैवास्ति यत् क्वचित्।।५६।।
यथा स्नेहं विना दीपो विना प्राणं यथा तनु: ।
वृथा राज्यं तथा राजँस्त्वां विना धर्मपालक ! ।।५७।।

सूत उवाच

श्रुत्वा हृष्टमना राजा पुत्रं प्रोवाच धर्मत: ।
अमात्यानां सुधर्माया: पुत्रस्य वचनामृतम् ।।५८।।

**अमात्यहरूले भने-** हे महाराज! हजुरको कृपाबाट सर्वसाधारणले भोग्न नपाउने र देवराज इन्द्रजस्ता देवताहरूले मात्र भोग्ने सुख हामीले भोग्यौं । अहिले हजुर वनतर्फ लाग्नुभयो भने हजुरबिना हामी कसरी बस्नेछौं? हजुरलाई यस्तो अवस्थामा वन पठाएर व्याधासरि निठुर भई हामी यहाँ कसरी बस्न सक्छौं? ।।५०।। हजुरका सुपुत्र हेमकण्ठ ऐश्वर्यशाली, बलवान् र शत्रुहन्ता हुनुहुन्छ । उहाँ एक्लै राज्यसञ्चालन गर्न समर्थ हुनुहुन्छ र हामी विना पनि उहाँले राज्य गर्नुहुनेछ । अहिले हामी सबै किसिमका राज्यसुख त्याग गरी हजुरका साथ वन जान चाहन्छौं ।।५१।।

**सूतजीले भन्नुभयो** - त्यसपछि रानी सुधर्माले भनिन्- म वीरपुत्रकी आमा र वीर राजाकी पटरानी हुँ । म पनि मेरा पतिका साथ लागेर उहाँको सेवा गर्ने उद्देश्यले वन जान चाहन्छु। तपाईंहरूले मेरा छोराका साथ रही राज्यशासनको सञ्चालनमा सहयोग गर्नुपर्दछ ।।५२।। प्राणीहरूले गरेका पूर्वकर्मको फल दु:ख अथवा सुखको भोग अरूले गर्दैन त्यसको भोक्ता ऊ आफूमात्र हुन्छ । जसले जस्तो कर्मफल भोग्नुपर्ने हुन्छ त्यसले त्यो फल आफैले भोग्नुपर्दछ ।।५३।। अनेक प्रकारका विषयसुखको भोग गरिसकेकी मैले मेरा पतिकी पटरानीका रूपमा राज्यसुख पनि भोगिसकेकी छु । प्राचीन मुनिहरूले लोक र परलोक दुवैमा नारीहरूले पतिको अनुगमन गर्नुपर्दछ भनेका छन् । तसर्थ म पनि मेरा पतिका साथ वन जान चाहन्छु ।।५४।। माता-पिताका कुरा सुनेपछि शोकले सन्तप्त भएका विनीत राजपुत्र हेमकण्ठले आफ्ना पिता सोमकान्तलाई सम्बोधन गरे।।५५।।

**हेमकण्ठले भने** - हे राजसिंह ! मेरा पूज्य पिताश्री ! हजुरको अभावमा मलाई राज्य, रानी, धन-सम्पत्ति र जीवन पनि चाहिँदैन । हजुरको सेवा गर्नुबाहेक मेरो अरू कुनै कर्तव्य छैन ।।५६।। हे धर्मपालक महाराज ! विना तेलको बत्ती जसरी व्यर्थ हुन्छ त्यसै गरी विना प्राणको शरीर पनि व्यर्थ हुन्छ र अहिले मलाई हजुरविनाको यो राज्यभोग पनि व्यर्थ लाग्नेछ ।।५७।।

**सूतजीले भन्नुभयो** - हे मुनिजन ! अमात्य, महारानी सुधर्मा र छोरा हेमकण्ठका अमृतमय वचन सुनेर प्रसन्न भएका राजा सोमकान्तले आफ्नो छोरा हेमकण्ठलाई सम्बोधन गरे ।।५८।।

